# विराम कश्चन भवदर्थ एव कल्पितः



## कुत्र...



एतत् भवन्तः वृण्वन्तु
व्यवस्थां वयं रचयायः





ईप्सितं स्थानं भवन्तः वृणवन्तु, नयामो वयं भवतः तत्र, यत्र भवद्भिः केवलं विश्रान्तिपूर्वकं उपभोगः कार्यः।

आह्लादकरः, बोधमयः, आकर्षकः विस्मयकरः तमिळ्नाडुप्रदेशः। प्रत्येकस्य पुरुषस्य तत्तद्भावानुसारं विशिष्टं राजते तमिळ्नाडुप्रदेशः। टीटीडीसी आयोजितैः पर्यटनैः वैयक्तिकस्य आर्थिकस्थितिमुद्दिश्य रचितैः अभिमतस्य स्थलस्य दर्शनसुखमनुभूय स्वयं जानन्तु। विद्युच्छाकटिक तथा भूतल यानद्वारा अपि पुटीकृतपर्यटनानि, तीर्थयात्राहन-शैत्यस्थलाटनानि च आयोज्यन्ते। सर्वेषु च पर्यटनेषु सुखमयं परिभ्रमणं, प्रशस्तः वासः महार्घं पूर्णं च भोजनं तथा मार्गदर्शकाश्च भवन्ति। अतः विरामकालस्य संपूर्णता सिद्ध्यर्थं भवद्भिः आरक्षणं कार्यं, तथा सुखमास्वादनीयम्।

## संपर्को विरामः किं वद्धन्ति भवन्तः?

| पुटीकृत पर्यटनानि | |
|---|---|
| महाबलिपुरं यात्रा | ( एक दिनं) |
| तिरुपति यात्रा | ( एक दिनं) |
| नवग्रह क्षेत्र यात्रा | (३ दिनानि) |
| आरुपडैवीडु यात्रा | (४ दिनानि) |
| दक्षिणभारत यात्रा | (६ दिनानि) |
| कन्याकुमारी यात्रा | (७ दिनानि) |
| गोवा-मन्त्रालया मुख्यपर्वी क्षेत्र यात्रा | (८ दिनानि) |
| तमिलनाडु पर्यटनं | (८ दिनानि) |

| रेल एवं सड़क यात्राएं | | | | |
|---|---|---|---|---|
| दिल्ली | - | चेन्नै | - | दिल्ली |
| मुम्बई | - | चेन्नै | - | मुम्बई |
| कोलकाता | - | चेन्नै | - | कोलकत्ता |
| अहमदाबाद | - | चेन्नै | - | अहमदाबाद |
| लखनऊ | - | चेन्नै | - | लखनऊ |
| जयपुर | - | चेन्नै | - | जयपुर |
| हैदराबाद | - | चेन्नै | - | हैदराबाद |

DIPR/1456/DIS/2006



क्लेशरहित पर्यटन विषये इत उपरि ज्ञातुं टीटीडीसी:
तमिळनाडु पर्यटन विभाग, दूरवाणी: +९१-४४-२५३८३३३३/४४४४, २५३८९८५७
दूरलेख: +९१-४४-२५३६१३८५ (चेन्नै, भारतम्)
E-mail: ttdc@vsnl.com www.tamilnadutourism.org

टीटीडीसी होटेल एवं पैकेज् बुक कर्तुं आमाके ओन् लैन् www.ttdconline.com/ पश्यन्तु।



# AN IDEAL GIFT FOR THE FESTIVE SEASON




THREE EXCITING BOOKS FROM
TWO RENOWNED WRITERS FOR CHILDREN

## MANOJ DAS AND RUSKIN BOND
















These are besides
the four books of

## LEGENDS AND PARABLES OF INDIA

from CHANDAMAMA







**INDIA IS A LAND OF STORIES, RICH IN LEGENDS, PARABLES AND MYTHS.**

***Chandamama*** **has enriched many generations of young minds with these stories. The spiritual subtext and moral lessons in these delightful stories will, we hope, continue to fascinate and mould young Indian minds.**

***Popular Prakashan*** **is proud to co-publish some of their best storeis in the Legends and Parables of India Series and the New Fiction for the Young Series that will educate, entertain and inspire the growing generation.**

CHANDAMAMA   PopulaR prakashan

*For trade enquiries, contact*

Chandamama India Ltd., 82, Defence Officers Colony, Chennai - 600 097.
Popular Prakashan Pvt. Ltd., 4648/ 1, Ansari Road 21, Daryaganj, New Delhi - 110002



**चन्दमामा** सम्पुटः - २१ नवम्बर् - २००५ सञ्चिका - ११



# अन्तरङ्गम्



## एतस्य अङ्कस्य विशेषाः


















**ग्राहकशुल्कम् -**

अमेरिका-केनडादेशयोः कृते

प्रतिकृतिमूल्यम् - $२

वार्षिकं शुल्कं - $२०

भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -



**Subscription Division**

**CHANDAMAMA INDIA LIMITED**

No. 82, Defence Officers Colony,

Ekkatuthangal, CHENNAI - 600 097

E.mail : subscription@chandamama.org



**ग्राहकशुल्कविवरणम्**

वायुयानेन भारतेतरदेशान् प्रति

**वार्षिकं (१२ सञ्चिकाः) - रू.९००/-**

**भारते रू. १४४/- (बुक्पोस्ट् द्वारा)**

भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा 'Chandamama India Limited' नाम्ना प्रेषणीयम् ।



विज्ञापिकादानार्थं सम्पर्क्यताम् -

**चेन्नै** - *शिवाजी*, Ph - 044-22313637/22347399

Fax: 044-22312447, Mobile: 98412-77347

email : advertisements @ chandamama.org

**देहली** - OBEROI MEDIA SERVICES, Telefax (011) 22424184

Mobile: 98100-72961, email: a.s.oberoi@indiatimes.com



*संस्थापकौ –*
**चक्रपाणिः, बि. नागिरेड्डिः च**

# निसर्गविषये अस्माकं दृष्टिः परिवर्तेत

निसर्गस्य दृष्ट्या प्रगताः अप्रगताः च देशाः समानाः । निसर्गः यदा कुपितः भवति तदा सः धनिकनिर्धनभेदं, समर्थदुर्बलभेदं वा न परिगणयति । गतेषु दिनेषु 'कत्रीना'-चण्डमारुतः अमेरिकादेशस्य समुद्रतीरम् अपीडयत्, यश्च देशः सुप्रगतदेशत्वेन ख्यातः अस्ति । तत्र द्वित्रेभ्यः दिनेभ्यः पूर्वम् एव चण्डमारुतसम्भावना ज्ञापिता आसीत्, तथापि हानेः निवारणे ततः विशेषलाभः न जातः ।

एतस्य दुरन्तस्य अनन्तरं भारतमूलैः जनैः तत्र कृतं किञ्चन कार्यम् अस्माकम् अवधानम् आकर्षति । केचन सिक्खसमुदायीयाः जनाः सन्त्रस्तानां साहाय्यार्थं योजनां कृतवन्तः । ते सामूहिकभोजनव्यवस्थाम् आरब्धवन्तः, यत्र च सन्त्रस्ताः बहवः योग्यम् आहारं जलं च प्राप्तवन्तः । नितरां प्रशस्तं कार्यम् एतत् । एतस्य निमित्तं दशलक्षाधिकडालरमितः यः व्ययः जातः सः 'युनैटेड् सिक्खस्'नामकेन सङ्घटनेन निरूढः इति श्रूयते ।

एतादृशेन कृत्येन ते भारतस्य गौरवं वर्धितवन्तः । एतदवसरे अस्माभिः एतत् चिन्तनीयं यत् निसर्गः कथं व्यवहरति, किमर्थं च सः कदाचित् कुपितः भवति इति । गभीरतया चिन्तनात् ज्ञायते यत् मानवः निसर्गविषये यं दुराचारं करोति तस्यैव फलम् एतत् इति । अतः सर्वेण अपि मानवेन निसर्गविषये स्वीया दृष्टिः परिवर्तनीया अस्ति, येन निसर्गः कुपितः न भवेत् । निसर्गविषये प्रीतिः, भूमेः विषये आदरः च यदा भवेत् तदा एव दुष्परिणामाः अपगताः स्युः । दुष्परिणामाः अपयान्तु इत्येव वयम् आशास्महे एतस्मिन् दीपावलीपर्वावसरे ।

*सम्पादकः* – **विश्रम्**





# जगतः अतिप्राचीनं तैलसंस्करणकेन्द्रम्



"बालाः ! भवन्तः जानन्ति किं यत् जगतः अतिप्राचीनं तैलसंस्करणकेन्द्रं भारते एव अस्ति इति ?" इति पृष्टवान् दासवर्यः वीणायाः कक्ष्याम् उद्दिश्य इन्धनतैलस्य इतिहासं श्रावयन् ।

"एवम् ! तत् केन्द्रं कुत्र अस्ति ?" इति कुतूहलेन पृष्टवन्तः सर्वे छात्राः ।

"तत् अस्ति असमराज्ये दिग्बोयिनगरे । इण्डियन् आयिल् कार्पोरेषन्संस्थायाः असमविभागस्य केन्द्रं तदेव अस्ति । तस्य तैलागारस्य वैशिष्ट्यद्वयम् – शताधिकवर्षेभ्यः पूर्वम् एतत् आरब्धम् इति, जगतः अतिप्राचीनं तैलसंस्करणकेन्द्रम् एतदेव इति च ।"

"तत्र तैलसत्ता कथं ज्ञाता?" इति अपृच्छन् छात्राः ।

"१८६७ तमे वर्षे दिग्बोयिसमीपे कर्मकराः रेलपट्टिकामार्गं सज्जीकुर्वन्तः आसन् । रात्रौ अपि तैः कार्यं करणीयं भवति स्म । अरण्यस्थाः पशुपक्षिकीटादयः एव तेषां सुहृदः आसन् । कदाचित् कश्चन गजः तेषां कार्यस्थलम् आगतः । तेन यत्र यत्र पदानि स्थापितानि तत्र सर्वत्र तैलांशः तैः परिलक्षितः । ताम् अनुसरन् गतः अधिकारी एतत् दृष्ट्वा उच्चैः अघोषयत् 'Dig boy ! dig' इति । तस्मात् एव तस्य प्रदेशस्य नाम 'दिग्बोयि' इति जातम् । ततः अचिरात् एव तत् स्थलं जगतः मानचित्रे प्रमुखं स्थानम् अवाप्नोत् ।"

"अहो, अपूर्वा घटना एषा ।"

"एतस्याः घटनायाः अनन्तरं शतं वर्षाणि अतीतानि । तत् केन्द्रं यद्यपि प्राचीनं, तथापि आधुनिकैः यन्त्रैः उपेतं सत् तैलसंस्करणक्षेत्रे सुविख्यात् अस्ति अद्य ।"



# धर्मस्य जयः

लक्ष्मीपुरनामके ग्रामे अनुपमः नाम धनिकः वसति । सः न केवलं धनी, अपि तु विशालायाः भूमेः स्वामी अपि । दरिद्राः कृषिकाः तस्य क्षेत्रेषु कार्यं कुर्वन्तः जीवनं यापयन्ति । तेभ्यः योग्यं वेतनादिकं तेन दीयते स्म । अतः कृषिकाः अपि तं धनिकम् आदरेण पश्यन्ति स्म । एवं जीवनं सुखकरम् आसीत् तस्य ।

अनुपमस्य पूर्वजाः मल्लविद्यायां प्रसिद्धाः । अनुपमोऽपि मल्लेषु अन्यतमत्वेन परिगणितः । पूर्वजानां स्मरणार्थं सः प्रतिवर्षं मल्लविद्या-स्पर्धाम् आयोजयति, तत्र विजेतृन् पुरस्कार-प्रदानेन प्रोत्साहयति च । तस्य प्रसिद्धिः सर्वत्र आसीत् यत् तस्य एतदपि किञ्चन कारणम् ।

समस्तपुरस्य अधीनेषु ग्रामेषु लक्ष्मीपुर-ग्रामोऽपि अन्तर्भूतः । समस्तपुरस्य भूस्वामी कृष्णभूपतिः । सः अनुपमस्य कीर्तिं श्रुत-वान् आसीत् । कदाचित् सः स्वस्य सहायकम् आहूय उक्तवान् - ''लक्ष्मीपुरनामकः ग्रामः अस्मदधीनः एव । तत्रत्यः अनुपमः महतीं ख्यातिं प्राप्तवान् । यदि एवमेव अनुवर्तेत तर्हि तस्य कीर्तिः इतोऽपि अधिकतया प्रसृता स्यात् । अहं नाममात्रेण भूस्वामी भवेयम् । अतः भवान् कमपि उपायं चिन्तयतु, येन अनुपमस्य सर्वं क्षेत्रं मदधीनं भवेत्'' इति ।

तदा सः सहायकः सविनयम् अवदत् - ''आर्य, एतादृशे विषये मैत्र्या एव जयः सम्पादनीयः । अनुपमस्य पुत्री नितरां सुन्दरी । तां यदि भवतः पुत्रः परिणयेत् तर्हि भवदिष्टं सिद्धम् इव । अतः अनुपमस्य पुत्री स्नुषात्वेन परिगण्यताम्'' इति ।

एषा सूचना समीचीना इति अचिन्तयत् कृष्णभूपतिः । अतः सः अविलम्बेन अनु-पमस्य गृहम् आगच्छत् । अनुपमः तं प्रीत्या सत्कृतवान् । ताभ्याम् आदौ ग्रामीणाः विषयाः केचन चर्चिताः । किञ्चित्कालानन्तरं कृष्ण-



कश्चन कालः अपेक्षितः'' इति ।

भूस्वामिनः परिवारः गृहात् प्रस्थितः । ततः अनुपमः अग्रिमस्य परिणामस्य विषये अचिन्तयत् । सम्यक् विचिन्त्य सः निरणयत् – 'अत्र भयस्य कारणं किमपि नास्ति । यत्किमपि भवतु, पुत्र्याः विवाहं मम मित्रस्य पुत्रेण सहैव करिष्यामि' इति । एवं निर्णीतवान् सः समययापनं विना स्वेन निश्चितेन वरेण पुत्र्याः विवाहं निर्वर्तितवान् एव ।

एतं विषयं ज्ञात्वा भूस्वामी कुपितः सन् सहायकम् आहूय – ''भवतः सूचनया मया अनुपमस्य गृहं गतम् । किन्तु किं जातम् ? मम तु तस्य सम्पत्तिः आवश्यकी । अतः अद्य एव घोषणं कारयतु यत् इतः परम् अनुपमस्य समग्रा सम्पत्तिः मदधीना इति'' कोपेन उक्तवान् ।

भूपतिः विवाहविषयं प्रस्तुतवान् ।

तदा अनुपमः हसन् – ''आर्य ! भवान् तु भूस्वामी । अहं तु सामान्यः । अतः मम पुत्री भवतः पुत्रस्य अनुरूपा न भवेत् । अपि च मम पुत्र्याः विवाहः मम कस्यचन मित्रस्य पुत्रेण सह भवेत् इति बहु पूर्वमेव निश्चितम् । केषुचिदेव दिनेषु विवाहः सम्पत्स्यते अपि । अतः अहं भवता क्षन्तव्यः'' इति उक्तवान् ।

कृष्णभूपतिः अनेन कुपितः अभवत् । तदा पार्श्वे उपविष्टः तस्य सहायकः अनुपमम् उक्तवान् – ''गृहम् आगतां लक्ष्मीं दूरीकुर्वन् अस्ति मूर्खः भवान् । अपि च विवाहविषयं तिरस्कुर्वता भवता महान् प्रमादः कृतः । अस्य परिणामः किं भवता ज्ञायते ?'' इति ।

अस्मात् वचनात् भीतः अनुपमः कम्पमानः उक्तवान् – ''अस्मिन् विषये विचिन्त्य वक्तुं

तदा एव तत्र आगतः भूस्वामिनः पुत्रः शक्तिवर्मा पितरम् उक्तवान् – ''अनुपमः न केवलं भवतः, अपि तु ममापि अपमानं कृतवान् । मां जामातृत्वेन अनङ्गीकृत्य महान्तम् अपराधम् अपि सः कृतवान् । अतः तस्मै कथं दण्डनं दातव्यमिति अहमेव चिन्तितवान् अस्मि'' इति ।

स्वेन चिन्तितम् उपायमपि सः पितरम् उक्तवान् – ''अहं मल्लयुद्धे अजेयः अस्मि इति भवता अपि ज्ञायते । मल्लयुद्धे अहं तं वृद्धम् अनुपमं लीलया जेष्यामि । मल्लयुद्धस्य नियमानुगुणम् एव अहं स्पर्धार्थम् अनुपमम् आह्वयामि । युद्धे कश्चन समयोऽपि मया उच्यते यत् युद्धे यः जयं प्राप्स्यति सः एव अन्यस्य सम्पत्तेः प्रभुः इति । एषः मार्गः न्याय्यः फल–

प्रदक्ष'' इति ।

एतदनुगुणं मल्लयुद्धस्पर्धा आयोजिता । स्पर्धार्थम् आगतान् सर्वान् मल्लान् लीलया एव जितवान् शक्तिवर्मा । ततः तेन काचन घोषणा कृता - ''स्पर्धार्थिनः सर्वे चिन्तयन्ति यत् अनुपमेन सह मल्लयुद्धं भविष्यति चेत् जीवनं धन्यम् इति । अतः यदि अनुपमः मां जयेत् तर्हि तम् अहं मम समानं भूस्वामिनं परिगणयिष्यामि । यदि सः मत्तः पराजयं प्राप्नुयात् तर्हि तस्य सकला सम्पत्तिः मदधीना भवेत् । ततः सः सामान्यः जनः इव कालं यापयेत्'' इति ।

शक्तिवर्मणः एतानि वचनानि श्रुत्वा तत्र स्थिताः सर्वे अनुपमस्य हितैषिणः विरोधं प्रकटितवन्तः । किन्तु अनुपमः कुपितान् सर्वान् सान्त्वयन् उक्तवान् - ''सर्वे शान्ताः भवन्तु । अहं जानामि - वृद्धस्य सतः मम स्पर्धायां भागग्रहणं न उचितम् इति । तथापि अहम् एतं स्पर्धाह्वानं स्वीकरोमि । मम विश्वासः अस्ति यत् धर्मस्यैव जयः भवेत् इति'' इति ।

अनुपमस्य धैर्येण तेजसा च शक्तिवर्मा क्षणमात्रं निर्विण्णः । तस्य मनसि किञ्चित् भयम् अपि उत्पन्नम् । धर्मस्यैव जयः इति पदं पुनः पुनः तस्य मनसि श्रूयमाणम् आसीत् ।

अनुपमशक्तिवर्मणोः मल्लयुद्धं प्रारब्धम् । किन्तु प्रथमावृत्तौ एव शक्तिवर्मा भूमौ पतितः । तस्य मनसि धैर्यम् अपगतम् । अनुपमं जेतुम् अहं न प्रभवामि इत्यपि भावना तस्य मनसि जाता । तेन भयेन एव सः स्वस्य पराजयम् अङ्गीकुर्वन् अवदत् - ''वयसा, बलेन, शिक्षणेन च अहमेव श्रेष्ठः । तथापि प्रथमावृत्तौ एव अहं पराजितः यत् तत् अनुपमे स्थितं धर्मबलं प्रकटयति'' इति ।

मल्लयुद्धस्य परिणामः एवं भवेत् इति कृष्ण-भूपतिः स्वप्नेऽपि न चिन्तितवान् आसीत् । तस्य विश्वासः आसीत् यत् पुत्रः जयशाली भवेदेव इति । किन्तु इदानीं जातेन अपमानेन सः खिन्नः अभवत् । तथापि किमपि कर्तुम् अशक्नुवन् सः अनुपमम् अभिनन्दनवचनानि उक्त्वा पुत्रेण सह समस्तपुरं प्रतिगतः ।

अनुपमः पूर्ववत् सर्वेषाम् आदरं प्राप्य, तेषां साहाय्यं कुर्वन् बहूनि वर्षाणि सुखेन जीवितवान् ।





# जीवनमार्गः

लक्ष्म्याः एकमात्रपुत्रः सत्यवान् । पुत्रं महत्या प्रीत्या लक्ष्मीः पालितवती । पञ्चमे वयसि सत्यवतः पिता दिवङ्गतः । ततः आरभ्य पुत्रे लक्ष्म्याः प्रीतिः अधिका जाता ।

सत्यवान् जन्मना योग्यः एव । किन्तु गच्छता कालेन सः दुष्टः सञ्जातः । वृथा व्ययं कुर्वन् गृहे स्थितं सर्वं धनं नाशितवान् सः । मातुः बोधनम् अपि अपरिगणयन् सः दुष्टं मार्गमेव आश्रितवान् । यदा पुत्रः विंशतिवर्षीयः जातः तदा मातुः मनसि चिन्ता आरब्धा यत् मम पुत्रस्य भविष्यं किं स्यात् इति । एतया चिन्तया एव सा मरणं प्राप्तवती ।

मातुः मरणानन्तरं सत्यवान् अनाथः जातः । तस्य समीपे किमपि न आसीत् । अग्रे जीवनं कथं करणीयम् इति सः चिन्ताग्रस्तः । अतः सः ग्रामे स्थातुम् अनिच्छन् ग्रामान्तरं गतः । किन्तु तत्रापि कोऽपि अस्य साहाय्यं न कृतवान् । ततः निराशः सः तं ग्रामम् अपि त्यक्तवान् । अन्यः कोऽपि जीवनमार्गः न आसीत् तस्य पुरतः । अतः सः अचिन्तयत् यत् मरणं विना इदानीं मम अन्या गतिः नास्ति इति ।

एवं चिन्तयन् सः मार्गे गच्छन् आसीत् । तदा कस्यचित् निम्बवृक्षस्य अधः काचन वृद्धा नाणकानि गणयन्ती तेन दृष्टा ।

मार्गे गच्छन्तं सत्यवन्तम् आहूय सा वृद्धा पृष्टवती - ''एतस्मिन् घोरे आतपे कुत्र गच्छन् अस्ति भवान् ?'' इति ।

सत्यवतः मुखात् किमपि वचनं न निर्गतम् । तदीयं मुखं दृष्ट्वा एव सा वृद्धा ज्ञातवती यत् एषः नितरां बुभुक्षितः अस्ति इति ।

अतः सा स्वसमीपे स्थितं फलद्वयं तस्मै प्रीत्या दत्त्वा अवदत् - ''स्वीकरोतु एतत्'' इति ।

तदा सत्यवान् सङ्कोचेन उक्तवान् - ''मम समीपे धनं नास्ति'' इति ।

भामहः

"धनविषये अलं चिन्तया । भवान् मम पौत्रः इव अस्ति । एतत् खादतु" इति सा वृद्धा प्रीत्या उक्तवती ।

सत्यवान् वृद्धया दत्तं फलद्वयं भक्त्या खादित्वा तया दत्तं जलं पीतवान् । ततः वृद्धा सत्यवन्तम् उद्दिश्य – "पुत्र ! मम वयः आशीतिः वर्षाणि । मम पुत्राः पौत्राः च भगवता नीताः । किन्तु अहं न नीता तेन । अतः अनन्यगतिकतया मया जीवनीयम् एव । एतानि फलानि विक्रीणाना अहं जीवामि । मम जीवनोपायः एषः एव" इति वदन्ती सा फलकण्डोलं शिरसि संस्थाप्य ततः प्रस्थिता ।

वृद्धायाः एतं जीवनोपायं दृष्ट्वा सत्यवान् आश्चर्यान्वितः जातः । ततः प्रस्थितः सः अरण्यमार्गम् आश्रितवान् । अरण्ये गमनसमये कस्माच्चित् वृक्षात् काश्चन शाखाः पतिताः तेन दृष्टाः । सः शिरः उन्नमय्य अपश्यत् । तत्र दशवर्षीयः कश्चन बालः वृक्षे उपविश्य शाखाः कर्तयन् तेन दृष्टः ।

तस्य विषये सत्यवति दया उत्पन्ना । सः तं बालं पृष्टवान् – "अस्मिन् अल्पे वयसि किमर्थम् एतादृशं श्रमजनकं कार्यं कुर्वन् अस्ति भवान् ? गृहं त्यक्त्वा अरण्यं किमर्थम् आगतं भवता ?" इति ।

वृक्षस्य उपरिष्टात् एव स बालकः सत्यवन्तम् उक्तवान् – "महोदय ! गृहे यदि भवामि तर्हि उदरं कथं पूर्णं भवेत् ? एतानि काष्ठानि विक्रीय प्राप्तेन धनेन भोजनं करोमि । मम मातापितरौ न स्तः । श्रमेण एव उदरं पूरणीयं मया" इति ।

एतानि वचनानि सत्यवतः मनसि चिन्तातरङ्गान् उदपादयन् । सः तां वृद्धां स्मृतवान् । 'सा वार्धके अपि उदरपूरणार्थं श्रमजीवनं करोति । एषः बालः लघुवयस्कः सन्नपि श्रमं



कुर्वन् उदरं पूरयति । एवं स्थिते मया किमर्थम् उदरपूरणार्थं श्रमः न करणीयः ? मम अस्याः दैन्यावस्थायाः कारणम् अहमेव । मया एव मम कष्टं निवारणीयम्' इति विचिन्त्य सः स्वग्रामं गतः, ग्रामप्रमुखस्य गृहं गत्वा तस्य पुरतः अतिष्ठत् च ।

पर्यङ्के उपविष्टः ग्रामप्रमुखः एतं दृष्ट्वा पृष्टवान् - ''सत्यवन् ! कः विशेषः ? एतावन्ति दिनानि कुत्र यापितानि भवता ? मत्तः किमपि साहाय्यम् इष्यते किम् ?'' इति ।

प्रणामपूर्वकं सत्यवान् तम् अवदत् - ''महोदय ! भवान् मम पितरं जानात्येव । तेन श्रमेण सम्पादिता समग्रा सम्पत्तिः मया नाशिता । उदरपूरणार्थं किमपि कार्यं यदि मह्यं दीयेत तर्हि अहम् आजीवनं भवतः उपकारं स्मरेयम् । यत्किमपि कार्यं कर्तुम् अहं सिद्धः एव'' इति ।

तदा ग्रामप्रमुखः हसन् - ''भोः, इच्छामात्रेण कार्यं न लभ्यते । भवति एतादृशं परिवर्तनं द्रष्टुम् इच्छन्ती भवतः माता तथैव चिन्तया मृता । भवान् यदा परिवर्तितः सन् श्रमेण जीवनं कर्तुं सिद्धः भविष्यति तदा भवते दातव्यम् इति उक्त्वा सा मरणात् पूर्वं किञ्चित् धनम् एकरद्वयपरिमितं क्षेत्रं च मदधीनं कृतवती आसीत् । तिष्ठतु, तत् धनम् आनयामि'' इति वदन् गृहस्य अन्तः गत्वा तस्य मात्रा दत्तं धनं, क्षेत्रसम्बन्धिपत्रं च आनीय दत्तवान् ।

सत्यवान् तत्सर्वं स्वीकृत्य ग्रामप्रमुखं नमस्कृतवान् । तदा सः ग्रामप्रमुखः - ''वत्स ! भवतः मातुः विश्वासः आसीत् यत् भवान् कदाचित् वा सज्जनः भवेत् एव इति । तस्याः निरीक्षा अद्य सफला जाता । इतःपरं परिश्रमेण योग्येन मार्गेण जीविष्यामि इति यदि भवता प्रतिज्ञा क्रियेत तर्हि मात्रा दत्तम् एतत् धनादिकं सर्वं दशगुणितं भवेत् । परिश्रमेण प्राप्तेन धनेन याप्यमानं जीवनं सुखमयम् आनन्दमयं च भविष्यति'' इति उक्तवान् ।

सत्यवान् पुनः अपि ग्रामप्रमुखं प्रणम्य मनसि एव तस्मै कृतज्ञतां समर्पितवान् । 'अहो, मम भविष्यविषये एतस्य मनसि कियती श्रद्धा अस्ति !' इति विचिन्त्य सः तदा एव मनसि प्रतिज्ञां कृतवान् यत् परिश्रमेण कार्यं कृत्वा अहं ग्रामीणानाम् आदरपात्रं भविष्यामि, मातुः आशां च पूरयिष्यामि इति ।






# भयङ्करः खातः

प्राचीने काले ब्रह्मपुर्याः समीपे स्थिते अरण्ये केशवः नाम कश्चन युवकः प्रतिवसति स्म । पशुचारणं तस्य वृत्तिः । बाल्ये एव मातृवियोगः प्राप्तः आसीत् तेन । पिता एव तं पोषयति स्म ।

प्रातः एव क्षीरं दुग्ध्वा नगरं प्रति नयति स्म तदीयः पिता । ततः यत् धनं प्राप्यते तेन गृहाय आवश्यकानि वस्तूनि विपणितः क्रीणाति स्म सः ।

केशवः तत्पिता च कुटीरे निवसतः स्म । समीपे अन्यानि गृहाणि न आसन् । कुटीरं परितः, तन्नाम चतसृषु दिक्षु, पर्वताः दृश्यन्ते स्म । केशवः चारणाय धेनूः पर्वतप्रदेशं नयति स्म प्रतिदिनम् । हरिततृणमये प्रदेशे ताः चरणाय परित्यजति स्म सः ।

कदाचित् तस्य मनसि इच्छा भवति स्म - मया पर्वतशिखरं प्रति गन्तव्यम् इति । किन्तु तत्र न गन्तव्यम् इति पिता स्मारितवान् आसीत् । 'पर्वतगुहासु सर्पव्याघ्रभल्लूकादयः क्रूरजन्तवः भवन्ति । अतः तत्र अपायः अधिकः' इति उक्तवान् आसीत् सः ।

कदाचित् केशवः धेनूः पर्वतं नीत्वा ताः चारणाय परित्यज्य कस्यचित् वृक्षस्य अधः उपविष्टवान् । धनुषः साहाय्येन वृक्षस्थान् पक्षिणः लक्ष्यीकृत्य बाणप्रयोगम् आरब्धवान् सः ।

तावता पर्वतस्य कस्माच्चित् भागात् विकृतः ध्वनिः कश्चन श्रुतः । एतस्य श्रवणात् क्षणं यावत् केशवे भीतिः उत्पन्ना । तथापि आत्मनि धैर्यं प्रपूर्य सः ध्वनेः दिशि दृष्टिं प्रसारितवान् । तत्र शिलायाः उपरि कश्चन विचित्रः पशुः तेन दृष्टः ।



सः कश्चन अश्वाकारकः पशुः । किन्तु तस्य शरीरे वन्यगर्दभस्य शरीरे इव पट्टिकाः आसन् । तस्य शिरसि एकं शृङ्गम् अपि दृश्यते स्म ।

एतं पशुं दृष्ट्वा केशवः नितराम् आश्चर्यचकितः । एतादृशः विलक्षणः जन्तुः तेन श्रुतपूर्वः न आसीत् । इदानीं किं करणीयम् इति न ज्ञातं तेन । यावत् सः तं जीविनं लक्ष्यीकृत्य बाणप्रयोगं चिन्तयन् आसीत् तावता सः पशुः पुच्छं प्रसार्य कण्ठम् उन्नीय निर्निमिषदृष्ट्या तम् एव अपश्यत् ।

एतं सदवकाशं मन्यमानः केशवः धनुषः रज्जुं कर्णपर्यन्तम् आकृष्य बाणं प्रयुक्तवान् । बाणः यावत् विलक्षणजन्तोः समीपं गतः ततः पूर्वम् एव सः विलक्षणः जन्तुः शिलातः अवतीर्य भूमौ अतिष्ठत् ।

आश्चर्यचकितः केशवः अपरं बाणं प्रयोक्तुं यावत् प्रयत्नम् आरब्धवान् तावता सः जन्तुः केशवसमीपम् आगतवान्, तस्य हस्तस्थं बाणं मुखेन आकृष्य दूरे अक्षिपत् च ।

मम प्राणाः अपायस्थितौ सन्ति इति केशवः झटिति अवगतवान् । तथापि सः तु न भीतः । 'कष्टकरी अपि परिस्थितिः मया धैर्येण एव सम्मुखीकरणीया' इति सः निश्चितवान् । अतः सः वृक्षमूले स्थापितं दण्डं हस्तेन गृहीतवान् । किन्तु तावता तस्य जन्तोः व्यवहारे परिवर्तनं जातम् ।

सः जन्तुः महता विनयेन तस्य समीपम् आगच्छत् । स्वस्य मुखं तस्य स्कन्धे प्रीत्या अस्थापयत् च ।

एतस्मात् केशवः नितराम् आश्चर्यचकितः । 'मानवानां मनोभावम् अवगन्तुम् अहो, विशिष्टां शक्तिं वहति एषः' इति अचिन्तयत् सः । एतस्मात् मम हानिः न भविष्यति इति भावः अपि तस्मिन् उदितः ।

सः उत्साहेन जन्तोः पृष्ठस्य उपरि स्वस्य हस्तं स्थापितवान् । तस्मात् सन्तोषं प्रकटयन् सः विचित्रः जन्तुः अश्वः इव हेषारवं कुर्वन् पुनः पुनः अग्रिमपादाभ्यां द्वित्रवारं कूर्दनम् अकरोत् ।

एषः प्रायः अश्वकुलीयः स्यात् इति अचिन्तयत् केशवः । एतस्य उपरि आरुह्य उपवेष्टव्यम् इति तीव्रा इच्छा तस्मिन् उत्पन्ना । अतः सः झटिति उत्प्लुत्य तम् आरुह्य उपविष्टवान् ।

सः विचित्रः पशुः पुनः अपि सकृत् हेषारवं कृत्वा झटिति पर्वतशिखरदिशि प्रस्थानम्

अकरोत् ।

तस्य निग्रहादिकं कर्तुं खलीनं किमपि नास्ति इत्यंशः केशवेन लक्षितः । यथा यथा पर्वतः आसन्नः तथा तथा तस्य विचित्रजन्तोः गमन-वेगः अपि प्रवृद्धः ।

केशवः तु तस्य केसरान् दृढतया गृहीत्वा स्वस्य पतनं निवारयन् दृढतया उपविष्टवान् आसीत् ।

विचित्रः जन्तुः कन्दुकम् इव उद्गत्य शिलाम् आरोहत् । केशवस्य मनसि भीतिः प्रवृद्धा । 'एषः जन्तुः मां पर्वतशिखरं नेतुम् इच्छति इति भाति । पर्वतशिखरे गुहासु व्याघ्र-भल्लूकादयः क्रूरजन्तवः वसन्ति इति श्रूयते । तत्र मायाविनः घोराः राक्षसाः अपि भवितुम् अर्हन्ति । मान्त्रिकतान्त्रिकादयः अपि अत्रत्यासु पर्वतीयासु गुहासु एकान्ते साधनामग्नाः भवन्ति प्रायः । अतः एव मम पिता पर्वतशिखरं प्रति गमनं निवारयति स्म । इदानीं मया आत्मरक्षणोपायः चिन्तनीयः एव' इति विचिन्त्य केशवः तस्मात् जन्तुतः कूर्दनं कृतवान् ।

सः विचित्रः जन्तुः अपि गमनं स्थगयित्वा सकृत् परिभ्रमणम् अकरोत् । अग्रे किं करणीयम् इति केशवेन न ज्ञातम् । सः प्रतिगत्य तस्य वृक्षस्य समीपं गतवान्, यस्य च अधः तेन सदा उपविश्यते स्म । विचित्रः जन्तुः अपि तम् एव अनुसरन् वृक्षसमीपम् आगत-वान् ।

'एतादृशः जन्तुः इतः पूर्वं मया क्वापि न दृष्टः । एतादृशः जन्तुः प्रपञ्चे स्यात् इत्यपि कस्यचिदपि मुखात् मया न श्रुतम् । एषः



पर्वतात् अवतीर्य स्वयं मत्समीपम् आगतः । यदा मया एषः आरूढः तदा एतेन पर्वतशिखरं प्रति मां नेतुं प्रयासः कृतः । एतस्मात् स्पष्टं यत् एतस्य वासः पर्वतशिखरे क्वापि स्यात् इति । यदि एतं ब्रह्मपुरीं नीत्वा विक्रयणं कुर्यां तर्हि प्रभूतं धनं तु लभ्येत । किन्तु किम् एषः जन्तुः मया निग्रहीतुं शक्येत ?' इति चिन्तितं तेन ।

किमपि निर्णेतुम् अशक्नुवन् केशवः तूष्णीम् उपाविशत् । सः जन्तुः तु तदीयं पशुसमूहं प्रविश्य अन्ये पशवः इव तृणस्य चरणे निरतः जातः । केशवस्य गावः प्रथम-दर्शनेन यद्यपि तस्मात् भीताः, तथापि किञ्चिदनन्तरं निर्भीकाः सन्तः स्वच्छन्दं तृण-चरणे मग्नाः जाताः ।

'सूर्यास्तपर्यन्तम् एषः अत्र तिष्ठेत् ।

सूर्यास्तानन्तरं तु पर्वतशिखरं गच्छेत्' इति अचिन्तयत् केशवः । किन्तु तथा तु न प्रवृत्तम् । यदा सायं गावः गोष्ठं प्रतिनिवृत्ताः तदा सः विलक्षणः जन्तुः अपि तैः सह गोष्ठम् आगच्छत् । केशवः गवां पुरतः तृणानि पातयित्वा कुटीरं प्राविशत् ।

विचित्रजन्तोः विषयं पितरं वदेयम् उत न इति निर्णेतुम् अशक्नुवन् सः भोजनं समाप्य शयनम् अकरोत् ।

अनन्तरदिने प्रातः केशवस्य पिता तम् उत्थाप्य अवदत् - ''वत्स ! उत्तिष्ठ । अद्य दैवात् रक्षिताः वयं सर्वे । रात्रौ अस्माकं पशुभिः सह कश्चन वृकः अपि गोष्ठं प्रविष्टः आसीत् इति भाति । सः कुतः आगतः इति न ज्ञायते'' इति ।

एतस्य श्रवणात् केशवः नितराम् आश्चर्य-चकितः । सः झटिति तं विचित्रजन्तुम् अस्मरत् । तमेव मम पिता वृकं भावितवान् स्यात् इति निर्णीतं तेन ।

'मम पिता वृद्धः । अतः तस्य दृष्टिः मन्दा । तस्मात् सः अश्वाकारं तं जन्तुं वृकं भावितवान् अस्ति । अथवा किं सः अश्वाकारः जन्तुः एव रात्रौ वृकरूपं प्राप्तवान् स्यात् ? किं तेन अस्मदीयाः गावः मारिताः स्युः ?' इत्यादयः विविधाः सन्देहाः तस्मिन् उत्पन्नाः जाताः झटिति एव ।

सः पितरम् अपृच्छत् - ''तेन कति गावः मारिताः ?'' इति ।

''भगवतः दयया कस्याश्चिदपि धेनोः वृषभस्य वा अपायः तु कोऽपि न जातः । मां दृष्ट्वा सः वृकः गोष्ठात् पलायनम् अकरोत्'' इति अवदत् पिता ।

तदा केशवः दीर्घं निश्वस्य - ''यं पशुं भवान् दृष्टवान् सः प्रायः न वृकः । ह्यः सायं कश्चन विलक्षणः जन्तुः अस्माकं पशुसमूहं प्राविशत् । सः एव दृष्टः स्यात् भवता'' इति



उक्त्वा पूर्वस्मिन् दिने पर्वतसमीपे प्रवृत्तं सर्वं विवृतवान् ।

सर्वं श्रुत्वा पिता आश्चर्यं प्रकटयन् - ''मया पशुसमूहे कोऽपि जन्तुः न दृष्टः । पर्वतात् सः आगतः इति वदति भवान् । तर्हि तद्विषये सावधानेन भवितव्यं भवता । सः कश्चन मायावी राक्षसः स्यात् अपि । पशुरूपेण आत्मानं परिवर्तयितुं समर्थाः मायाविनः पर्वतकन्दरेषु बहवः भवितुम् अर्हन्ति अपि'' इति अवदत् ।

पितुः वचनं श्रुत्वा उच्चैः हसन् केशवः अवदत् - ''यदि वयं ग्रहीतव्याः स्याम तर्हि राक्षसः वास्तवरूपेण एव अत्र आगतः स्यात् । विचित्रपशुरूपेण किमर्थं वा आगम्येत तेन ? सः विचित्रः जन्तुः रात्रौ पर्वतशिखरं गतः स्यात्'' इति ।

केशवः पशुप्रकरणं यद्यपि विस्मर्तुम् इच्छति तथापि पौनःपुन्येन सः तस्य स्मृतिपथम् आगच्छति एव ।

पिता क्षीरं स्वीकृत्य नगरं प्रति प्रस्थितवान् । केशवः शीघ्रं स्नानादिकं समाप्य अल्पाहारं च समाप्य गाः पर्वतसमीपं नेतुं कुटीरतः बहिः आगतवान् ।

विलक्षणः जन्तुः दृश्येत किम् इति चिन्तयन् सः परितः अपश्यत् । किन्तु सः कुत्रापि न दृष्टः तेन ।

केशवः गाः पर्वतमूलं नीतवान् । तान् तृणचरणाय प्रेषयित्वा तस्य वृक्षस्य अधः उपाविशत्, यस्य च अधः सर्वदा उपविश्यते स्म । अल्पे एव काले सः विलक्षणः जन्तुः हेषारवं कुर्वन् तस्य समीपम् आगत्य मौनेन




अतिष्ठत् ।

''भवता पुनः आगतम् ? मया भवान् विस्मृतः आसीत् एव प्रायः'' इति अवदत् केशवः ।

विलक्षणः जन्तुः शिरः अचालयत् अङ्गीकारं सूचयन् इव ।

तावता तेन पितुः वचनं स्मृतम् - 'मायाविनः राक्षसाः पश्वादिवेषं धृत्वा आगच्छन्ति' इति । अतः केशवः तं सन्देहेन अपश्यत् सकृत् । तस्य सन्देहं निराकुर्वन् इव सः विलक्षणः जन्तुः मन्दं पशुसमूहं प्रविश्य तृणानां चरणे मग्नः जातः ।

केशवः तमेव किञ्चित्कालं निर्निमेषं पश्यन् आसीत् । ततः सः वृक्षान् लक्ष्यीकृत्य बाणप्रयोगम् आरब्धवान् ।

कश्चन कालः अतीतः । केषाञ्चित् अश्वानां

खुरपुटध्वनिः तेन दूरात् श्रुतः । अल्पे एव काले उभौ अश्वारोहिणौ भटौ तस्य समीपम् आगतौ । बाणप्रयोगे मग्नं तम् आश्चर्येण दृष्टवन्तौ तौ ।

''सेनापतिवर्य ! अयं कश्चन अपरः एकलव्यः इति भाति'' इति नायकम् अवदत् कश्चन भटः ।

''एकलव्योऽयम् ? एवं तर्हि किं विलम्बेन ? एतस्य अङ्गुष्ठः कर्त्यताम्'' इति वदन् अपरः समीपम् आगतवान् । तस्य वेषभूषादयः उत्कृष्टाः आसन् । तदीयः अश्वः अपि अलङ्कृतः आसीत् ।

''भोः ! किं भवतः एतावान् अहङ्कारः ? अये, किम् एवं तूष्णीं स्थीयते ? आगतः कः इति किं भवता न ज्ञायते ? ब्रह्मपुर्याः महासेनापतिः उपस्थितः अस्ति'' इति अवदत् अश्वारोही भटः ।

एतत् श्रुत्वा केशवः तं सेनापतिं नमस्कृतवान् । सेनापतिः तदीयान् धनुर्बाणादीन् तीक्ष्णदृष्ट्या अपश्यत् ।

ततः तीक्ष्णस्वरेण सः केशवम् अपृच्छत् - ''अये ! बालक ! भवान् कः ? किं क्षत्रियकुले जातः ? कस्य वा प्राणहरणाय धनुर्विद्यायाः अभ्यासः क्रियते भवता ?'' इति ।

''श्रीमन् ! अहं कस्यचित् कृषिकस्य पुत्रः । एतस्मिन् लोके मम शत्रुः कोऽपि नास्ति । अतः कस्यापि प्राणाः मया हरणीयाः न सन्ति अपि । गोचारणसमये समयस्य यापनाय बाणप्रयोगाभ्यासः क्रियते मया । मम गावः पर्वतमूले तत्र चरन्तः सन्ति'' इति विनयेन अवदत् केशवः ।

यावत् सेनापतेः दृष्टिः गोसमूहस्य दिशि गता तावता सः भटः उच्चस्वरेण अवदत् - ''सेनापतिवर्य ! तत्र दृश्यताम् । अपूर्वः पञ्चकल्याणः देवताश्वः एव दृश्यते तत्र'' इति ।

सेनापतिः आश्चर्येण एव तं विलक्षणं जन्तुं पश्यन् अवदत् - ''सः न पञ्चकल्याणः अश्वः, न वा देवताश्वः कश्चित् । सः तु वन्यगर्दभः इव दृश्यते । किन्तु वन्यः गर्दभः एवम् उन्नतः न भवति । एतादृशस्य जन्तोः विषये मया अपि कदापि न श्रुतम् । तम् अत्र आनयतु तावत्'' इति ।

(अनुवर्तते)



# वेताल-कथा

## राजकुमार्याः प्रश्नाः

श्मशानं प्रति गमनं सहजां वृत्तिं भावयन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । ततः यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् - ''अये राजन् ! विद्यावन्तः केचन विवेकिनः विनम्राः च भवन्ति, ज्ञानम् अन्येभ्यः वितरन्ति अपि । किन्तु अन्ये केचन विद्यामदं प्राप्य दर्पेण व्यवहरन्ति । शाब्दिकेन मायाजालेन अन्येषाम् उपहासं तिरस्कारं च कुर्वन्ति ते । स्वस्य कार्यं यावत् साधनीयं तावत् ते उपायेन व्यवहरन्ति । तादृशः कश्चित् भवन्तं प्रेरितवान् न स्यात्



अतः राजा राज्ञीम् अवदत् - ''योग्यस्य वरस्य चयनस्य अधिकारः पुत्र्याः एव भवतु । अस्माकं हस्तक्षेपः कोऽपि तत्र मा भवतु । सा एव केनचित् क्रमेण योग्यं वरं कञ्चित् चिनोतु नाम'' इति ।

राज्ञी एतं प्रस्तावम् अङ्गीकृतवती । ततः राजकुमार्याः विवाहसन्नाहवार्ता सर्वत्र प्रसृता ।

राजकुमारी विलासिनी विद्यावती यथा तथैव रूपवती अपि । अतः तस्याः परिणयाय बहवः राजकुमाराः अग्रे आगताः । राजकुमार्याः वरचयनक्रमः विलक्षणः आसीत् । सा चिन्तयति स्म यत् मया परिणीयमानः सर्वेषु अपि क्षेत्रेषु समर्थः स्यात् इति ।

यदा योग्यः वरः न लब्धः तदा राजा भूपतिसेनः विलासिन्याः स्वयंवरम् उद्घोषितवान् । वर्षम् अतीतं चेदपि कोऽपि राजकुमारः विलासिन्या पृच्छ्यमानानां प्रश्नानाम् उत्तरं दातुं समर्थः न जातः ।

अथ कदाचित् रुद्रपुरस्य राजकुमारः अभिलाषवर्मा माल्यदेशम् आगतवान् परिणयेच्छया । यदा सः राजभवनस्य पुरतः अश्वात् अवतीर्णः तदा कश्चन राजभटः धावन् आगत्य तं राजभवनस्य अन्तः नीतवान् । तस्य वासादिनिमित्तं समुचितां व्यवस्थां कृतवान् च ।

घण्टानन्तरं कौशेयशाटिकां धृतवती वनदेवी इव विराजमाना राजकुमारी विलासिनी मातापितृभ्यां सह तत्र आगता, अभिलाषवर्मणः पुरतः उपाविशत् च । तस्याः सौन्दर्यं दृष्ट्वा अभिलाषवर्मा नितराम् आश्चर्यचकितः । सः स्वस्य परिचयं निवेदितवान् ।

खलु ? मानवानां विविधाः स्वभावाः अवगन्तव्याः भवता । तदर्थम् अहङ्कारिण्याः राजकुमार्याः विलासिन्याः कथां श्रावयामि, विद्यावत्याम् अपि यस्यां गर्वः महता प्रमाणेन आसीत् । मार्गायासस्य परिहाराय तस्याः कथां श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

भूपतिसेनः माल्यदेशस्य राजा । विलासिनी तस्य एकमात्रपुत्री । तस्याः बोधनाय राज्ञा महापण्डिताः एव नियुक्ताः । यावत् प्राप्तवयस्कता प्राप्ता तावता तया सर्वासु विद्यासु प्रावीण्यं प्राप्तम् आसीत् । तेनैव सह तया महान् गर्वः अपि प्राप्तः आसीत् । राज्ञा राज्ञ्या चापि अयम् अंशः अवगतः एव । जनाः अपि ज्ञातवन्तः आसन् यत् राजकुमारी विद्यया सह अहम्भावम् अपि प्राप्तवती अस्ति इति ।

तदा विलासिनी मन्दहासपूर्वकम् उक्तवती – ''अहं भवन्तं कांश्चन प्रश्नान् पृच्छामि । यदि भवान् योग्यम् उत्तरं दद्यात् तर्हि आवयोः विवाहः प्रचलेत्'' इति ।

'अहम् उत्तरदानाय सज्जः अस्मि' इति शिरश्चालनेन सूचितवान् अभिलाषवर्मा । ततः विलासिनी पृष्टवती – ''भवतः राज्यस्य जनाः शुनकाः उत काकाः ?'' इति ।

अभिलाषवर्मा क्षणकालं विचिन्त्य अवदत् – ''मम राज्ये सर्वे काकाः एव । शुनकः तु कोऽपि नास्ति'' इति ।

एतत् श्रुत्वा मन्दहासं प्रकटयन्ती विलासिनी पुनः पृष्टवती – ''भवान् तु जन्मना चन्द्रवंशजः । तथापि स्वभावेन भवान् कः ? चन्द्रः उत सूर्यः ?'' इति ।

''अहं स्वभावेन सूर्यः अस्मि'' इति अवदत् अभिलाषवर्मा ।

''साधु साधु ! मम अन्तिमः प्रश्नः – पिता वनं गतः चेत् किमर्थं चिन्ता क्रियते ? गतः पुनः प्रत्यागच्छेत् एव ननु ?'' इति ।

अभिलाषवर्मा अवदत् – ''चिन्ता तु अज्ञानकारणतः'' इति ।

''पितृवनं गतः किं लोके प्रत्यागच्छेत् कोऽपि ?'' इति पुनः अपृच्छत् विलासिनी ।

''प्रत्यागच्छेत् एव । किन्तु कदाचित् प्रत्यागमनं स्वगृहं प्रति न स्यात्'' इति अवदत् अभिलाषवर्मा ।

एतत् उत्तरं श्रुत्वा विलासिनी मातापितरौ पश्यन्ती अवदत् – ''एषः मम कल्पनानुगुणम् उत्तरं दत्त्वा स्वयंवरे विजयी जातः'' इति ।

पुत्र्याः वचनं श्रुत्वा राजा राज्ञी च नितरां सन्तुष्टौ । राजा उत्थाय भाविनं जामातरं प्रीत्या



आलिङ्गितवान् ।

वेतालः एवं कथां समाप्य त्रिविक्रमम् अपृच्छत् - ''अये राजन् ! राजकुमारी-राजकुमारयोः प्रश्नोत्तरक्रमः किं बधिरमूकयोः व्यवहारं न स्मारयति ? राजकुमार्याः प्रश्नाः एव विलक्षणाः । एवं ननु ? राजकुमारस्य उत्तरम् इतोऽपि विलक्षणम् इव किं न भासते ? तयोः समग्रः व्यवहारः किं न असङ्गतः ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् - ''राजकुमारी विलासिनी बुद्धिमत्तया प्रश्नान् पृष्टवती । राजकुमारः अपि चातुर्येण एव समुचितम् उत्तरं दत्तवान् । यः आहारः लभ्यते तं विभज्य खादन्ति काकाः । शुनकाः तु आहारप्राप्तिसमये शत्रुवत् कलहं कुर्वन्ति । एतम् अंशं मनसि निधाय राजकुमारी पृष्टवती - 'भवतः राज्ये जनाः काकाः, उत शुनकाः' इति । 'काकाः' इति उत्तरं यच्छता राजकुमारेण सूचितं यत् मम राज्ये जनाः सौहार्देन वसन्ति इति । 'भवान् चन्द्रः उत सूर्यः ?' इति पृच्छन्ती विलासिनी ज्ञातुम् इष्टवती यत् भवान् स्वयं-प्रकाशी उत परावलम्बी इति । तदा अभिलाषवर्मणा 'अहं सूर्यः' इति कथयता उक्तं यत् अहं तु सामर्थ्येन सूर्यसदृशः इति ।

वनं प्रति गमनं नाम मरणप्राप्तिः । पितुः मरणे जाते दुःखं सहजम् । ये अज्ञानिनः भवन्ति ते अधिकं दुःखम् अवाप्नुवन्ति । विवेकिनः तु जातस्य मरणं ध्रुवम् इति जानन्तः अल्पे एव काले धैर्यं वहन्ति । अतः एव अभिलाषवर्मा अवदत् यत् 'अज्ञानकारणतः' इति । 'पितृवनं' नाम श्मशानम् इति वदन्ति कोषकाराः । अतः पितृवनं गतः नाम मरणं प्राप्तवान् जनः इति अर्थः । मरणं प्राप्तवतः पुनर्जन्म निश्चितम् एव । तच्च जन्म कस्मिंश्चिदपि कुले भवितुम् अर्हति, न तु पूर्वतने एव कुले । अयम् एव आशयः राजकुमारेण अभिलाषवर्मणा प्रकाशितः । अतः तयोः प्रश्नोत्तरं बधिरमूकयोः व्यवहारः इव न । न वा तत् असङ्गतम्'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा वृक्षशाखाम् अवलम्बितवान् ।



अन्यदेशीया अनुश्रुता कथा (उत्तरामेरिकीया सियोक्स्मतीया)

# पर्वतखातस्था अपूर्वा शिला

कश्चन ग्रामः । ततः अनतिदूरे कश्चन खातः । तत्र काचित् उन्नता शिला । सा तावदुन्नता यत् तस्याः शिखरं मेघेषु लीनं भवति । तत् शिखरं न हि तीक्ष्णाग्रम् । प्रवासं गताः केचन बालाः तत्र यथा सुखेन स्थातुं शक्नुयुः तथा विशालं तत् ।

किन्तु तत् शिखरं सर्वथा दुरारोहम् । कदाचित् केचन साहसिनः पर्वतारोहिणः रज्जु-टङ्क-मुद्गरादीनां साहाय्येन तत् शिलाशिखरं कथञ्चित् प्राप्तवन्तः एव । किन्तु एतस्याः सिद्धितः प्राप्तः आनन्दः तेषां मुखे दीर्घकालं यावत् न विलसितम् । तस्य कारणं - ततः अवतरणाय ते कमपि मार्गं न प्राप्तवन्तः एव ! अन्ते ते लघुवायुयानस्य (हेलिकाप्टर्नामकस्य) साहाय्येन कथमपि स्वस्थानम् आगतवन्तः ।

अत्र उच्यमाना कथा तु तादृशे कालखण्डे प्रवृत्ता, यत्र च हेलिकाप्टर्-विमानाकाशवाणी-निस्तन्तुयन्त्रादीनां नाम अपि न आसीत् । एवं स्थिते अपि तत् शिलाशिखरं गतौ उभौ बालौ ततः सजीवं प्रत्यागतौ !!

कथम् एतत् शक्येत ? यदि ताभ्याम् आरूढं स्यात् तर्हि एव खलु अवतरणस्य प्रश्नः उद्भवति ? वस्तुतः तु तौ तत् न आरूढवन्तौ एव । इदानीं पुनः प्रश्नः उद्भवेत् - आरोहणम् एव न जातं चेत् अवतरणम् अपि न स्यात् खलु इति । तौ आरोहणप्रयत्नं यद्यपि न कृतवन्तौ, तथापि शिलाशिखरे तु आस्ताम् ।

सर्वम् एतत् विलक्षणम् इव भासते खलु ? आरोहणप्रयत्नम् अकृतवतोः बालयोः अवतरणप्रश्नः एव असङ्गतः इति भवन्तः निर्णीतवन्तः अपि स्युः । अलं त्वरया । सर्वं विस्तरेण वदिष्यामः वयम् । प्रवृत्तं तु एवम् -

कदाचित् उभौ बालौ अल्पभारेण काष्ठेन निर्मितेन कन्दुकेन क्रीडन्तौ आस्ताम् । कन्दुकं दूरे क्षिप्त्वा तौ पुनः प्रतिसङ्गृह्णीतः स्म ।





प्रविष्टवन्तौ । कन्दुकः तु कुत्रापि न लब्धः एव । किन्तु तद्विषये तयोः अवधानम् अपि न आसीत् एव । पुष्पाणि जिघ्रन्तौ, फलानि खादन्तौ, सर्वं च पश्यन्तौ तौ अग्रे गतवन्तौ । ग्रामात् सुदूरम् आगतम् इत्यंशः अपि ताभ्यां न लक्षितः । किन्तु समग्रः खातः यदा चन्द्रिकामयः जातः, तदा ताभ्यां वस्तुस्थितिः अवगता ।

चन्द्रिकायां खातप्रदेशस्य शोभा अन्यविधा एव आसीत् । तां यदा तौ आस्वदमानौ आस्तां तदा कश्चन महाकारः भल्लूकः तयोः समीपम् आगतः । गुहातः निर्गत्य आगतेन तेन भल्लूकेन एतौ बालौ दृष्टौ । तयोः दर्शनात् तस्य महान् आनन्दः एव जातः । स च आनन्दः क्रीडनार्थम् उभौ प्राप्तौ इति कारणात् तु न ।

कदाचित् एवं क्षिप्तः कन्दुकः ग्रामपार्श्वे स्थितं लघुपर्वतम् अतिक्रम्य कुत्रापि अपतत् । तस्य आनयनाय तौ तं लघुपर्वतम् आरूढवन्तौ । स च पर्वतः ताभ्याम् इतः पूर्वं कदाचिदपि न आरूढः आसीत् । अतः पर्वतारोहणतः ताभ्याम् अपूर्वं दृश्यं दृष्टम् । विविधाः पुष्पफलादियुक्ताः वृक्षाः लताश्च ताभ्यां दृष्टाः । नानाविधाः वन्यमृगाः क्वचित् दृष्टिगोचराः भवन्तः, क्वचित् च अदृश्यतां गच्छन्तः च चेतः हरन्ति स्म ।

कन्दुकम् अन्विष्यन्तौ रमणीयानि दृश्यानि पश्यन्तौ च तौ बालौ अज्ञाततया एव खातं

भल्लूकः तयोः ग्रहणाय हस्तौ प्रासारयत् । तस्य मुखं तु भीतिजनकम् एव आसीत् ।

अपायः ताभ्यां बालाभ्यां ज्ञातः । तथापि तौ तु न धैर्यच्युतौ । तौ तं भल्लूकम् अवदताम् - "भल्लूकार्य ! क्षणं स्थीयताम् । किमर्थम् एतावती त्वरा ? किम् आवाभ्यां चरमप्रार्थनां कर्तुम् अपि अवकाशः न प्राप्येत ?" इति ।

"प्रार्थना ? किं तया प्रार्थनया ? सा च प्रार्थना कीदृशं साहाय्यं कुर्यात् भवतोः ? इतः पलायनं तु सर्वथा न शक्यम् । मम सम्मुखीकरणाय भवतोः समीपे किमपि आयुधम् अपि

नास्ति । भवतोः रक्षणाय आगन्तुम् अर्हः कोऽपि जीवी अपि अत्र नास्ति । मम दर्शनात् अपि भीतिं न प्राप्तवन्तौ भवन्तौ । भवतोः धैर्यं निश्चयेनास्ति प्रशंसार्हम् । भवतोः मांसस्य रुचिरपि प्रशंसार्हा एव स्यात्'' इति विकटाट्टहासं कुर्वन् अवदत् भल्लूकः ।

वङ्कन्टङ्कः इति तयोः आराध्यस्य देवस्य नाम, यश्च वनजातीयैः सर्वैः सभक्ति अर्च्यते ।

''हे वङ्कन्टङ्कवर्य ! देव ! एतस्य महाकारस्य भल्लूकस्य आहारत्वं प्रापयितुम् एव किं भवान् आवाम् अत्र खातप्रदेशं प्रति आगमनाय प्रेरितवान् ? हे भगवन् ! इदानीं भवान् एव शरणम् आवयोः । कोऽपि मार्गः भवता एव दर्शनीयः'' इति तौ प्रार्थितवन्तौ । प्रार्थनारतयोः तयोः नेत्राभ्याम् अश्रुधारा निरन्तरं निर्गच्छति स्म ।

करुणामयः देवः वङ्कन्टङ्कः झटिति तयोः रक्षणाय उद्युक्तः जातः । बालयोः भल्लूके च पश्यत्सु, यत्र बालौ स्थितौ आस्तां स च शिलामयः पर्वतभागः हठात् वर्धमानः जातः । क्षणाभ्यन्तरे सः भागः तावदुन्नतं प्रवृद्धः, येन भल्लूकः हस्तगतात् आहारात् वञ्चितः जातः ।

भल्लूकः नखैः शिलाम् उदकिरत् । शिलां परितः बहुवारम् अभ्रमत् । तथापि सः किमपि प्रयोजनं न प्राप्नोत् । बालौ न जानीतः स्म यत् अग्रे किं करणीयम् इति । अचिरात् एव वनब्लीनामकः गरुडः तत्र उपस्थितः । सः तौ बालौ एकैकशः नीत्वा पर्वतमूले स्थितस्य तयोः ग्रामस्य समीपे अस्थापयत् । मध्यरात्रसमये तौ गृहं प्राप्तवन्तौ । तयोः मातरौ तयोः कृते पाकं सज्जीकृत्य तौ एव प्रतीक्षमाणे कातरतया उपविष्टे आस्ताम् । रात्रौ तौ सुखनिद्रां प्राप्तवन्तौ ।

अनन्तरदिने प्रातः तौ ग्रामजनान् प्रवृत्तं सर्वम् उक्तवन्तौ । ग्रामजनाः महता कुतूहलेन खातप्रदेशं गत्वा उन्नताकारां तां शिलां प्रत्यक्षं दृष्ट्वा बालयोः वचने विश्वासं कृतवन्तौ ।

श्वेतजनानाम् आक्रमणतः पूर्वम् एव प्रवृत्ता घटना एषा । इदानीं श्वेताः तत्रत्यानां मूलवासिनां भूमिं वशीकृतवन्तः सन्ति । ते मूलवासिनः निर्दिश्यन्ते 'अमेरिकन् इण्डियन्'-शब्देन । श्वेतजनाः तां शिलां 'पिशाचशिलां' वदन्ति । किन्तु मूलवासिनः तां शिलां 'भल्लूकशिला'शब्देन निर्दिशन्ति ।





पुटाः एते बालकथानाम्

# आहारतः अपि श्रेष्ठा भवति विद्या



कार्तिक भूषण्, उडुपि

प्राचीने काले आसीत् कश्चन ग्रामः । तत्र आदित्यः अनुदीपः चेति भ्रातरौ वसतः स्म । तौ परस्परप्रीत्या व्यवहरतः स्म । एकस्य निमित्तम् अपरः सर्वविधं त्यागं कर्तुम् अपि सज्जः एव । तौ अनाथौ आस्ताम् । अतः जीवननिर्वाहाय ताभ्यां परिश्रमः करणीयः आसीत् एव । तौ मत्स्यग्रहणेन दिनानि यापयतः स्म ।

अथ कदाचित् ताभ्यां प्रभूततया मत्स्याः प्राप्ताः । महता आनन्देन तौ तान् मत्स्यान् गृहं नीतवन्तौ । किञ्चित्कालानन्तरं कश्चित् द्वार-ताडनम् अकरोत् । अनुदीपः द्वारम् उद्घाटितवान् । द्वारे कश्चन बुभुक्षितः भिक्षुकः स्थितः आसीत् । तं दृष्ट्वा करुणां प्राप्य अनुदीपः अन्तः गत्वा कांश्चन भृष्टान् मत्स्यान् आनीय तस्मै दत्तवान् । तान् खादित्वा तृप्तिं प्राप्य अनुदीपाय धन्यवादान् समर्प्य ततः निर्गतवान् सः भिक्षुकः ।

अनन्तरदिने अपि सः एव भिक्षुकः तत् गृहं प्रति आगतः । किन्तु एतदवसरे गृहे अनुदीपः न आसीत् । आदित्यः द्वारम् उद्घाट्य भिक्षुकम् उपस्थितं दृष्ट्वा तदीयां भिक्षायाचनप्रवृत्तिम् अनिन्दत् । ततः गृहस्य अन्तर्भागतः बडिशदण्डं स्वीकृत्य बहिः आगतवान्, द्वारं पिधाय तं भिक्षुकं समीपे स्थितं विशालं कासारं प्रति अनयत् च । तत्र सः भिक्षुकस्य हस्तं गृहीत्वा - ''भोः, एतं बडिशं स्वीकृत्य एतस्य अग्रभागे कीटान्



संयोजयतु । एतस्य साहाय्येन मत्स्य-ग्रहणम् अभ्यस्यतु । एतदेव कौशलं भवतः उदरं पूरयिष्यति'' इति उक्त्वा मत्स्य-ग्रहणकौशलं तं बोधयित्वा गृहं प्रतिगतः ।



कानिचन वर्षाणि अतीतानि । अथ कदा-चित् ग्रामे वार्ता प्रसृता यत् दयानिधिः कश्चन महाधनिकः एतं ग्रामम् आगच्छन् अस्ति इति । धनिकस्य आगमनकारणं तु ग्रामे कोऽपि न जानाति स्म ।

धनिकः रथेन तं ग्रामम् आगतवान् । रथे सुवर्णेन पूर्णाः स्यूताः आसन् । ग्रामस्य जनाः सहर्षं तं स्वागतीकृतवन्तः । जनानां मध्ये आदित्यः अनुदीपश्चापि आस्ताम् । धनिकः रथात् अवतीर्य आदित्यस्य पुरतः स्थित्वा अपृच्छत् - ''श्रीमन् ! किं भवता अहं न अभिज्ञातः ?'' इति ।

आदित्यः आश्चर्यम् अनुभवन् अवदत् - ''मया इतःपूर्वं महाधनिकः कोऽपि न दृष्टः एव'' इति ।

तदा धनिकः हसन् अवदत् - ''भवता पूर्वम् अहं दृष्टः एव । किन्तु अहं विस्मृतः भवता । पूर्वं यः भवता मत्स्यग्रहणं पाठितः सः एव अस्मि अहम् । मम एतस्याः स्थितेः कारणं भवता बोधिता सा विद्या एव । अतः एतत् उपायनं स्वीकरोतु कृपया'' इति वदन् सुवर्णेन रत्नैः च पूर्णं स्यूतं तस्मै दत्तवान् ।

एतस्य प्राप्त्या आदित्यः नितरां सन्तुष्टः । तावता अनुदीपः अग्रे आगत्य अपृच्छत् - ''श्रीमन् ! किं भवता अहं विस्मृतः ? मया भवते आहाररूपेण मत्स्याः दत्ताः आसन् खलु ? तथापि भवता मम भ्रात्रे एव उपायनं दत्तं, न तु मह्यम्'' इति ।

तदा धनिकः - ''भवता मह्यम् आहारः दत्तः आसीत् इति तु सत्यम् । किन्तु सः आहारः दिनमात्रं यावत् मम बुभुक्षां निवारयितुं शक्तः जातः । एतेन बोधिता विद्या तु मम जीवनम् एव पर्यवर्तयत् । भवता आहारः दत्तः यत् तदर्थं स्वीक्रियताम् एषः हारः'' इति वदन् अनुदीपाय एकं सुवर्णहारं सगौरवं दत्तवान् ।

अनन्तरं तयोः भ्रात्रोः अनुज्ञां प्राप्य ततः निर्गतवान् सः ।

अनुदीपः अवगतवान् यत् मम अग्रजेन दत्ता विद्या एव आहारतः अपि श्रेष्ठा इति ।

# न्यायनिर्णयः





के. स्नेहा,
हैदराबाद

शान्तिपुरनामके ग्रामे रामः भीमः चेति उभौ सुहृदौ आस्ताम् । रामस्य क्षेत्रस्य पार्श्वे एव भीमस्य क्षेत्रम् । रामः यद्यपि निर्धनः, तथापि ग्रामे उत्तमां कीर्तिं सम्पादितवान् आसीत् । भीमः तु धनिकः । किन्तु आसूयापरः कृपणः च । कोऽपि यदि प्रगतिं साधयति तर्हि ईर्ष्यां प्राप्नोति स्म सः ।

अथ कदाचित् क्षेत्रकर्षणावसरे रामः अचिन्तयत् - 'मया एतत् कष्टम् इतोऽपि कियत्-कालं सोढव्यम् इति न ज्ञायते । भगवता मयि यदि कृपा दर्श्येत तर्हि अहं सुखेन जीवनं कुर्याम्' इति । अत्रान्तरे एव हलस्य अग्रभागः केनचित् शिलाखण्डेन घट्टितः जातः । रामः खनित्रेण तं शिलाखण्डम् अपनीतवान् । तस्य अधः तेन काचित् पेटिका प्राप्ता । पेटिकायाम् आभरणानि आसन् । तानि दृष्ट्वा रामः भगवन्तं कृतज्ञतापूर्वकं स्मृतवान् ।

तस्मिन् एव समये भीमः तत्र आगतः । सः अपि आभरणैः पूर्णां पेटिकाम् अपश्यत् । 'एतानि आभरणानि मया वशीकरणीयानि एव' इति विचिन्त्य सः रामम् अवदत् - ''राम ! एतानि पश्यामि तावत्'' इति ।



ततः सः रामेण दत्तानि आभरणानि एकैकशः दृष्ट्वा - ''भोः, एतानि मम मातुः । बहोः कालात् पूर्वम् एतानि अदृश्यतां गतानि आसन् । अन्वेषणात् अपि नैव लब्धानि । अद्य सौभाग्येन एतानि प्राप्तानि'' इति वदन् तानि स्वीकृत्य प्रस्थितवान् ।

तदा रामः भीमस्य हस्तात् तानि बलात् स्वीकृत्य अवदत् - ''न एतानि भवतः मातुः । भवान् असत्य-

वादी । एतानि मया कृषिभूमौ प्राप्तानि । भगवता दत्तानि एतानि'' इति ।

एतत् श्रुत्वा क्रोधं प्रकटयन् भीमः – ''एतानि मम मातुः इत्यत्र सन्देहः एव नास्ति । गच्छाव ग्रामाधिकारिणः समीपम् । एतानि कस्य इति सः एव निर्णयतु'' इति अवदत् ।

ततः तौ ग्रामाधिकारिसमीपं गतवन्तौ । उभयोः अपि कथनं श्रुत्वा अपि ग्रामाधिकारी निर्णेतुं न शक्तवान् यत् आभरणानि कस्य इति । सः सम्यक् जानाति स्म यत् भीमः स्वार्थी, रामः च निष्कपटः इति ।

अतः सः किञ्चित् विचिन्त्य अवदत् – ''भवन्तौ श्वः आगच्छताम् । तदा अहं निर्णयं श्रावयिष्यामि'' इति ।



अनन्तरदिने तौ ग्रामाधिकारिसमीपम् आगतौ । ग्रामाधिकारिणः निर्णयं श्रोतुं बहवः उपस्थिताः आसन् । ग्रामाधिकारी पेटिकाम् उद्घाट्य – ''भवन्तौ उभौ अपि वदतः यत् एतानि मदीयानि इति ।..'' इति यावत् वदन् आसीत् तावता उभौ राजभटौ तत्र आगत्य ग्रामाधिकारिणम् उपसर्प्य उक्तवन्तौ – ''महाराजः मृगयार्थं समीपस्थम् अरण्यम् आगतः अस्ति । तत्र भवता उपस्थातव्यम्'' इति ।

तावता ताभ्याम् आभरणपेटिका दृष्टा । तौ आश्चर्येण तानि आभरणानि स्पृष्ट्वा परीक्ष्य – ''एतानि तु महाराज्ञ्याः आभरणानि । केभ्यश्चित् दिनेभ्यः पूर्वम् एतेषां चौर्यं प्रवृत्तम् आसीत् । एतानि कुतः प्राप्तानि ?'' इति अपृच्छताम् ।

ग्रामाधिकारी प्रवृत्तं सर्वम् अवदत् । तदा तौ भटौ उक्तवन्तौ – ''एतस्य तात्पर्यं यत् एतौ उभौ अपि सम्भूय चौर्यं कृतवन्तौ इति । महाराजसमीपम् एतौ नयाम तावत्'' इति ।

एतत् श्रुत्वा नितरां भीतः भीमः ग्रामाधिकारिणः पादौ गृहीत्वा – ''महाशय ! एतेषाम् आभरणानां, मम च न कोऽपि सम्बन्धः । रामेण एतानि क्षेत्रे प्राप्तानि इत्येतदेव सत्यम् । अविवेकेन मया एतेषां प्राप्त्यर्थं यत्नः कृतः । कृपया अहं क्षन्तव्यः'' इति प्रार्थितवान् ।

''भीम ! भवतः मुखात् वस्तुस्थितिं वाचयितुम् एव मया एतत् तन्त्रम् आश्रितम् । एतौ न राजभटौ, अपि तु मदीयौ एव जनौ । आभरणानां सम्बन्धः मम नास्ति इति भवता सर्वेषां पुरतः अङ्गीकृतम् । अतः एतानि रामस्य एव इति निर्णीतं जातम् । भवता असत्यम् उक्तम् इत्यतः शतं रजतनाणकानि दण्डरूपेण दातव्यानि'' इति अवदत् ग्रामाधिकारी । जनाः तस्य निर्णयं बहुधा श्लाघितवन्तः ।



# सुन्दरस्य शनिवासरस्य कथा



श्रद्धा महदिक,
बेङ्गलूरु

रात्रौ सुन्दरं स्वप्नं दृष्ट्वा शनिवासरः अयं सन्तोषेण यापनीयः इति सङ्कल्प्य मया उत्थितम्। मम स्वप्ने सर्वे अलसाः एव दृष्टाः मया। 'हेरीपाटर्'प्रभावः स्यात् अयम् इत्यंशः मया न लक्षितः एव। शनिवासरः सन्तोषेण यापनीयः इति एकः एव अंशः आसीत् मम मनसि।

अहं स्नानगृहं गत्वा दन्तफेनं स्वीकर्तुं यदा उद्युक्ता तदा तत्र संश्लिष्टः लघुसन्देशः मया दृष्टः - ''श्रद्धे ! वयं त्वरया गच्छन्तः स्मः। भवती भोजनशालां गच्छतु - अम्बा'' इति।

एतां सूचनां पालयन्त्या मया भोजनशाला गता, माता किमर्थं कुत्र एवं त्वरया निर्गता स्यात् इति चिन्तयन्ती। भोजनपीठस्य उपरि मया करणीयानां कार्याणाम् आवली एव आसीत्। सन्तोषेण शनिवासरः यापनीयः इत्येतस्य मम स्वप्नस्य विरुद्धम् आसीत् एतत्।

तत्र निर्दिष्टं प्रथमं कार्यं वस्त्रक्षालनम्। मया अनिच्छन्त्या एव क्षालनयन्त्रे वस्त्राणि स्थापितानि, यन्त्रं चालितं च। क्षणकालं सर्वं सम्यक् एव आसीत्। किन्तु किञ्चित्कालानन्तरं यन्त्रे कोऽपि अपशब्दः श्रुतः इव। यन्त्रात् जलं सर्वं निर्गतम्। महता श्रमेण एव मया तत् मार्जितम्।

एतदनन्तरम् अहं सख्याः आह्वानाय दूरवाणीसमीपं गता। दूरवाणीसम्पर्कः तु प्राप्तः। किन्तु यावत् सम्भाषणम् आरब्धं तावता सम्पर्कः छिन्नः। कश्चन श्रुतपूर्वः ध्वनिः श्रुतः - 'गृहस्य ऊर्ध्वभागस्य वितर्दिका गन्तव्या' इति। मया एषः आदेशः उपेक्षितः। असमाधनेन एव ध्वनिग्राहकं मया स्वस्थाने स्थापितम्। ततः मया दूरदर्शनं प्रवर्तितम्। दूरदर्शने भीतिजनके उभे अफगानियन्नेत्रे क्षणं यावत् दृष्टिगोचरतां गते, ततः अदृश्यतां गते अपि !



एताः विलक्षणाः घटनाः मयि किञ्चित् सम्भ्रान्तिम् अजनयन्। तथापि मया धैर्यच्युतिः न प्राप्ता। तावता भ्रातुः प्रकोष्ठे स्थितात् सङ्गीतयन्त्रात् ध्वनिः श्रुतः। एतस्मात् किञ्चिदिव भीता अहं तस्य स्वरस्य सूचनां सम्यक् पालितवती। तस्य आदेशस्य पालनं मूर्खतायै

इति जानत्या अपि मया अनन्यगतिकतया तत् कृतम् ।

अहं गृहस्य द्वारम् उद्घाटितवती । द्वारस्य पुरतः एव कश्चन मृतः काकः दृष्टः । तं परितः हरिद्राकुङ्कुमादिकं पातितम् आसीत् । केचन अस्थिखण्डाः अपि तत्र आसन् । एतत् सर्वम् अत्र कथम् आगतम् इति अंशः मया सर्वथा न ज्ञातः । अन्यस्य अनुपस्थितौ एतादृशाः दृष्टाः इत्यतः महती भीतिः प्राप्ता मया । धैर्यं वक्तुं तु गृहे अन्यः कोऽपि न आसीत् । अतः भीतिः क्षणे क्षणे प्रवृद्धा । तस्याः भीतेः कारणतः अहं तत्रैव मूर्च्छां गता ।

न जाने कियान् कालः अतीतः स्यात् इति । यदा मया सचेतनता प्राप्ता तदा आकारिकाशब्दः श्रुतः । अहम् उत्थाय द्वारम् उद्घाटितवती । द्वारसमीपे कोऽपि न दृष्टः । मया भीत्या परितः दृष्टिः प्रसारिता ।

तावता मम नाम्ना सहितया चिटिकया युक्तम् एकं पुस्तकं तत्र दृष्टम् । मया तत् स्वीकृत्य जागरूकतया उद्घाटितं भीतिम् अनुभवन्त्या एव । पुस्तकस्य नाम आसीत् – *'नान्सी ड्राव् एण्ड् दि क्यूबर्ड् रूम्'* इति । प्रथमे एव पृष्ठे लिखितम् आसीत् – 'श्रद्धायै सप्रेम समर्प्यते एतत् – अनामिका' इति ।

अहं तु आ बाल्यात् एव पुस्तकप्रिया अस्मि । अतः झटिति प्रकोष्ठं गत्वा अहं पुस्तकस्य पठने प्रवृत्ता जाता । विविधाः पिशाचादिकथाः स्पश-कथाः च तत्र आसन् इत्यतः महत्या आसक्त्या तत् पठितं मया ।

पठनसमये एव वातायनात् बहिः त्रयाणां सञ्चारः लक्षितः मया । मया उत्थाय द्वारसमीपं गत्वा बहिः दृष्टिः प्रसारिता । तावता द्वारं स्वयम् उद्घाटितम् अभवत् ।

मम माता, पिता, भ्राता च हसन्मुखाः सन्तः द्वारे स्थितवन्तः आसन् ।

तावता मया स्मृतम् – 'अद्य एप्रिल्मासस्य



प्रथमं दिनम्' इति । अतः सर्वस्य कारणं मया अवगतम् एव । वैद्यः पिता काकदृश्यं सृष्ट्वा मां भीतां कृतवान्, अग्रजश्च दूरवाण्याः दूरदर्शनस्य च तन्त्रीपरिवर्तनं कृत्वा कमपि भ्रमं मयि जनितवान् इति मया ज्ञातम् ।

एतादृशः एव कश्चन उपायः अग्रे कदाचित् मया अपि आश्रयणीयः इति सङ्कल्पितवती अहम् । प्रवृत्तस्य विषये मनसः कषायः तु मया न प्राप्तः ।

# महामूल्यकं सन्धिपत्रम्




काव्या विश्वनाथन् अमेरिकावासिनोः भारतीयमूलयोः पुत्री । उपषोडशवर्षीया सा उभयोः कथाग्रन्थयोः लेखनविषये सन्धिपत्रे हस्ताङ्कनं कृतवती अस्ति । प्रकाशकः एतावता एव ५,००,००० डालराणि (२.२ कोटिः रूप्यकाणि) तस्यै अग्रिमधनरूपेण दत्तवान् अस्ति । अविश्वासार्हायाम् अपि एतस्यां वार्तायां विश्वासः करणीयः एव । यदा हस्तलेखात्मकः कथाग्रन्थः दास्यते तदा रायधनरूपेण प्रभूतं धनं पुनः प्राप्स्यति सा । सद्यः प्राप्तायाः वार्तातः ज्ञायते यत् सा प्रकाशकाय प्रथमस्य कथाग्रन्थस्य हस्तलेखप्रतिकृतिम् अर्पितवती अस्ति इति । काव्या इतःपूर्वं विद्यालयपत्रिकाभ्यः स्थानीयपत्रिकाभ्यः च लघुकथां लिखितवती आसीत्, न तु दीर्घकथाग्रन्थम् । उपषोडशवर्षीयया अल्पवयस्कया महामूल्यसम्बन्धे सन्धिपत्रे हस्ताङ्कनं यत् कृतं तत् तु अश्रुतपूर्वम् ।

# भारतस्य अपूर्वः बालः

अश्वत्थरवीन्द्रनाथः त्रयोदशवर्षीयः बालः । सः चेन्नैनगरे पठति । तस्मै 'ब्रिटानिया इण्डिया' संस्थया 'भारतस्य अपूर्वः बालः' इति बिरुदः दत्तः अस्ति । एषु दिनेषु 'स्टार् वर्ल्ड्'नामिकायां दूरदर्शन-वाहिन्यां सिद्धार्थबसुः तस्य बालस्य 'रसप्रश्न'कार्यक्रमम् आयोज्य तस्य अपूर्वतां प्रख्यापितवान् । स च बालः जगतः जनानां स्थानानां घटनानां च विषये अपूर्वं ज्ञानं वहति । विश्वकोषे विद्यमानाः सर्वे अंशाः करतलामलकायन्ते तस्य विषये । 'लैट् रीडिङ्ग्'विषये, ऐसाक्‌एसिमोवस्य विज्ञानादीनाम् आविष्कारविषये वा सः लीलया उत्तरयति । सः प्रतिदिनं सङ्गणकस्य पुरतः दीर्घकालम् उप-विशति विविधविषयसङ्ग्रहार्थम् । क्रिकेट्‌विषये आसक्तिः कौशलं चापि तस्य । तदीया एषा प्रतिभा निश्चयेनास्ति खलु अपूर्वा ?



# वाचकानां कृते कथास्पर्धा

## चिता कथापूर्तिः अर्हति रू. २५०/- पारितोषिकत्वेन




**अधस्तनकथा पठ्यताम् -**

पालनपुरनिवासी पीताम्बरः भगवत्याः भवान्याः भक्तः । भवानीमन्दिरे प्रचलिष्यन्त्याः वार्षिकविशेषपूजायाः निमित्तं सः पत्न्या पुत्र्या च सह गृहात् प्रस्थितवान् ।

भवान्याः मन्दिरं नद्याः अपरस्मिन् तीरे अस्ति । नदी तु नौकया क्रमणीया । तीरे एव यात्रिकान् प्रतीक्षमाणा काचित् नौका आसीत् ।

''नदीतरणाय कियत् शुल्कं स्वीक्रियते भवता ?'' इति नाविकम् अपृच्छत् पीताम्बरः ।

''प्रतिजनम् एकं रूप्यकम्'' इति अवदत् नाविकः ।

''तावदेव ? अत्यल्पं शुल्कम् एतत् ! एतावतः अल्पस्य शुल्कस्य स्वीकरणेन भवतः जीवनं कथं प्रचलेत् ?'' इति कुतूहलेन अपृच्छत् पीताम्बरः ।

तदा नाविकः मन्दहासपूर्वकं समुचितम् उत्तरं दत्तवान् । पीताम्बरः अपरं तीरं प्राप्य नौकातः अवतीर्य नाविकाय त्रीणि रूप्यकाणि दत्त्वा मन्दिरं प्रति गतवान् ।

एतां कथां १००-१५० शब्दैः पूरयन्तु भवन्तः । एतस्मिन् व्यवहारे नाविकस्य लाभः कथम् इति चिन्तयन्तु अपि । योग्यं शीर्षकं दत्त्वा पिहितपत्रस्य उपरि **'Read and React'** इति लिखित्वा अधस्तनेन प्रवेशपत्रेण सह प्रेष्यताम् ।

**अन्तिमः दिनाङ्कः - ३१, नवम्बर् - २००५**

नाम ---------------------- वयः --------- जन्मदिनाङ्कः -----------

विद्यालयः -------------------------------- कक्ष्या -----------

गृहसङ्केतः ------------------------------------------------

------------------------------------------------------------

-------------------------- Pincode ------------------------

पोषकस्य हस्ताक्षरम् भागग्रहीतुः हस्ताक्षरम्

**CHANDAMAMA INDIA LIMITED**

82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097



# गुरोः कर्तव्यम्

ब्रह्मदत्तः यदा काशीराज्यं पालयन् आसीत् तदा बोधिसत्त्वः तक्षशिलायां शिल्पाचार्यरूपेण जन्म प्राप्तवान् आसीत् । तस्य सकाशात् शिल्पशास्त्रम् अध्येतुं देशविदेशेभ्यः राजकुमारादयः आगच्छन्ति स्म ।

तक्षशिलानगरस्थस्य शिल्पाचार्यस्य कीर्तिं श्रुतवान् काशीनरेशः निश्चितवान् यत् विद्याभ्यासाय मया मम पुत्रः अपि तत्र प्रेषणीयः इति । किन्तु ऊनषोडशवर्षीयस्य राजकुमारस्य तत्र प्रेषणं मन्त्रिसामन्तादयः न अनुमतवन्तः । एकाकितया तत्र गमनं, गुरुकुले गुरुशुश्रूषा इत्यादयः कष्टाय इति मत्वा ते अवदन् - ''महाराज ! शिल्पशास्त्रनिपुणाः अस्माकं नगरे अपि सन्ति एव । एवं स्थिते तक्षशिलां प्रति युवराजस्य प्रेषणम् अनुचितं स्यात्'' इति ।

किन्तु राजा तेषां संस्तुतिं न पुरस्कृतवान् । सः कदाचित् पुत्रम् आहूय पादरक्षायुगलं ताडपत्रनिर्मितं छत्रं च दत्त्वा अवदत् - ''भवान् तक्षशिलां गत्वा शिल्पाचार्यसकाशात् विद्याम् अधिगृह्णातु, शिक्षणं समाप्य प्रत्यागच्छतु च । गुरवे दक्षिणारूपेण दातुं सहस्रं रजतनाणकानि नयतु च'' इति ।

पितुः एतस्य आदेशस्य अनुगुणं राजकुमारः एकाकी निर्गतवान् । सहस्रस्य रजतनाणकानां ग्रन्थेः वहनेन सः नितरां श्रान्तः जातः । मध्येमार्गं तत्र तत्र विश्रान्तिसुखम् अनुभवन् सः कष्टेन एव तक्षशिलां प्राप्तवान् ।

सः शिल्पाचार्यम् आगमनोद्देशं विवृतवान् । सहस्रं रजतनाणकानि गुरवे समर्प्य विद्याभ्यासम् आरब्धवान् सः । शिल्पशास्त्रस्य अध्ययनं सम्यक् एव प्रवृत्तम् । तस्य बुद्धितीक्ष्णतां दृष्ट्वा गुरुः नितरां सन्तुष्टः ।

कानिचन दिनानि अतीतानि । प्रतिदिनं गुरुः शिष्यः च नगरात् बहिः स्थितायां नद्यां स्नात्वा आगच्छतः स्म । एवम् एकस्मिन् दिने यदा तौ स्नानार्थं तत्र आगतवन्तौ तदा काचित् वृद्धा अपि तत्र आगता । सा आत्मना आनीतान् तिलान् जलेन क्षालयित्वा शोषणाय वस्त्रस्य

उपरि प्रसारितवती ।

राजकुमारः एतत् सर्वं दृष्टवान् । सः झटिति स्नानं समाप्य तीरम् आगतवान् । वृद्धायाः दृष्टिः अन्यत्र आसीत् । अतः सः मुष्टिमितान् तिलान् स्वीकृत्य खादितवान् । वृद्धया एतत् कथमपि लक्षितम् एव । तथापि सा मौनेन स्थितवती । अनन्तरदिने अपि वृद्धा तिलान् आतपे प्रसारितवती । राजकुमारः एतस्मिन् अपि दिने तिलान् चौर्येण स्वीकृत्य खादितवान् । एतस्मिन् दिने अपि वृद्धा मौनेन एव स्थितवती । तृतीये दिने अपि एषा घटना पुनः आवृत्ता । राजकुमारस्य चौर्यप्रवृत्तिविषये सा वृद्धा नितराम् असन्तुष्टा जाता ।

शिल्पाचार्यः स्नानं समाप्य यदा तीरम् आगतः तदा वृद्धा तम् उक्तवती – ''आचार्यवर्य ! आ त्रिभ्यः दिनेभ्यः भवतः शिष्यः मम तिलान् चोरयित्वा खादितवान् अस्ति । तिलाः नष्टाः इति मम नास्ति खेदः । तरुणस्य एतस्य चौर्यप्रवृत्तिः न अनुवर्तेत इति मम इच्छा । एतस्य व्यवहारः भवतः यशसि कलङ्कं कल्पयेत् । अतः सः अग्रे एवं यथा न कुर्यात् तथा दण्ड्यताम्'' इति ।

गृहं प्रत्यागतवान् शिल्पाचार्यः अन्यान् शिष्यान् सूचितवान् यत् राजकुमारस्य हस्तौ दृढतया ग्रहीतव्यौ इति । ततः दण्डेन तस्य पृष्ठे प्रहारान् दत्त्वा सः अवदत् – ''भवता यत् अनुचितं कार्यं कृतं तस्य निमित्तम् एतत् दण्डनम्'' इति ।

गुरोः व्यवहारेण राजकुमारः नितरां क्रुद्धः । किन्तु सः सामान्यः विद्यार्थी । विद्यार्थिनः दण्डने गुरोः अधिकारः अस्ति एव । अतः



सः प्रतिकर्तुं समर्थः न जातः ।

क्रोधसन्तप्तः सः तस्मिन् एव समये मनसि शपथम् अकरोत् – 'राजत्वप्राप्तेः अनन्तरं केनचित् व्याजेन एतं काशीराज्यम् आनाय्य दण्डयिष्यामि' इति ।

कालान्तरे युवराजस्य अध्ययनं समाप्तम् । काशीं प्रति गमनसमये सः गुरुं प्रणम्य तस्य आशीर्वादं प्राप्तवान् ।

ततः सः गुरुम् अवदत् – ''मम सिंहासनारोहणस्य अनन्तरं भवता सकृत् काशीं प्रति आगन्तव्यम् । तदवसरे अहं भवन्तं यथायोग्यं सत्कर्तुम् इच्छामि'' इति ।

शिष्यस्य एतत् निमन्त्रणं श्रुत्वा सन्तुष्टः गुरुः तत् अङ्गीकृतवान् ।

काशीं प्रतिगतः युवराजः तु केषाञ्चित् वर्षाणाम् अनन्तरम् अभिषिक्तः जातः । ततः कदाचित् सः गुरुं स्मृतवान् । झटिति कश्चित्

भटम् आहूय सः आज्ञापितवान् - ''भवता तक्षशिलां गत्वा शिल्पाचार्याय मम एतत् निमन्त्रणपत्रं दातव्यम्'' इति ।

शिल्पाचार्यः दूतमुखात् निमन्त्रणं प्राप्य अपि झटिति एव काशीं प्रति न प्रस्थितवान् ।

ततः केषाञ्चित् मासानाम् अनन्तरं सः काशीं गतवान् । राजभवनं प्राप्य स्वस्य परिचयम् उक्त्वा आगमनोद्देशम् उक्तवान् सः । राज्ञः गुरुः उपस्थितः इत्येतां वार्तां श्रुत्वा सभासदः महता आदरेण तं स्वागतीकृतवन्तः । तस्य उपवेशनाय उन्नतम् आसनं कल्पितम् अपि तैः ।

गुरोः दर्शनात् राजा स्वस्य पूर्वतनम् असन्तोषं स्मृतवान् । अतः सः शिल्पाचार्यं तीक्ष्णदृष्ट्या पश्यन् अवदत् - ''मुष्टिमितं तिलं यत् खादितं तदर्थं येन कठोरं दण्डनं विहितं सः हस्तगतः किं सप्राणं परित्यज्येत ?'' इति ।

सभासदः यथा न जानीयुः तथा शिल्पाचार्यमात्रे भीतिम् उत्पाद्य सः दण्डनीयः इति चिन्तनम् आसीत् राज्ञः । किन्तु राज्ञा यथा चिन्तितं तथा न तु प्रवृत्तम् । शिल्पाचार्यः किञ्चिदपि न भीतः ।

सः पूर्वतनीं घटनां सर्वेषां पुरतः प्रकाशितवान् - 'हे राजन् ! शिष्यः यदा दोषम् आचरति तदा सन्मार्गे तस्य आनयनाय प्रयासः गुरोः कर्तव्यम् । यदि अहं तस्मिन् दिने भवन्तं दण्डितवान् न स्यां तर्हि भवान् अद्य राजा न, प्रत्युत लुण्ठाकः अभविष्यत् । विवेकिनः पूर्वं दण्डितस्य विषये खिन्नाः न भवन्ति, अपि तु कृतज्ञताभावं वहन्ति'' इति ।

वस्तुस्थितिः सभासद्भिः सर्वैः ज्ञाता । ततः राजा नितराम् अपमानितः जातः । सः झटिति सिंहासनात् अवतीर्य गुरोः पादौ गृहीत्वा अवदत् - ''अयि महानुभाव ! मया यदा असमीचीने मार्गे पदं स्थापितं तदा भवान् मां सत्पथम् आनीतवान् । अतः अहं भवद्विषये नितरां कृतज्ञः अस्मि'' इति ।

राज्ञि जातं परिवर्तनं दृष्ट्वा शिल्पाचार्यः नितरां सन्तुष्टः । सभासदः अपि सन्तुष्टाः ।

ततः राज्ञः अनुरोधं पुरस्कुर्वन् शिल्पाचार्यः तक्ष शिलावासं परित्यज्य काश्याम् एव वासम् आरब्धवान् । आस्थानस्य आचार्यपदं विभूषयन् सः काले काले योग्येन मार्गदर्शनेन राजानं सत्पथे प्रवर्तितवान् ।



# मेषेण किमर्थं दण्डनं प्राप्तव्यम् ?

प्रतापरायः नाम कश्चन भूस्वामी सूर्यभूपतिनामकस्य भूस्वामिनः पुत्रीम् अनन्तलक्ष्मीं परिणीतवान् । प्रतापरायस्य यावती सम्पत्तिः ततोऽपि अधिकाः सम्पत्तिः, ग्रामाधिपत्यं च आसीत् सूर्यभूपतेः । अतः विवाहकालात् आरभ्य अनन्तलक्ष्म्याः मनसि खेदः आसीत् यत् सम्पत्त्या अननुगुणाय वराय अहं दत्ता इति । अतः सा सर्वदा अपि पत्युः व्यवहारे लोपं पश्यन्ती तं निन्दती भवति स्म ।

तस्मात् एव भूस्वामिनः गृहे स्थिताः सेवकाः सर्वे तां कलहशीलां भावयन्ति स्म । किन्तु प्रतापरायः तु सममनस्कः । सः पत्नीविषयकान् आक्षेपान् श्रुत्वा अपि अश्रुतवान् इव तिष्ठति स्म । तस्याः व्यवहारं दृष्ट्वा अपि अदृष्टवान् इव व्यवहरति स्म ।

तयोः विवाहानन्तरं ५० वर्षाणि गतानि । कदाचित् तौ यानेन समीपस्थं पर्वतं गतवन्तौ । तत्रत्यं निसर्गसौन्दर्यं, पशुपक्षिणां सञ्चारं च दृष्ट्वा तौ नितरां प्रमुदितौ जातौ । तावता अनन्तलक्ष्मीः अजानां गणे शोभमानम् एकं मेषं दृष्टवती । तं दर्शयन्ती सा पतिम् अवदत् – ''अस्माकं विवाहानन्तरं पञ्चाशत्तमं वर्षम् एतत् । अतः एतस्मिन् शुभावसरे एतस्य मेषस्य मांसेन भूरिभोजनं व्यवस्थापयाम'' इति ।

तदा प्रतापरायः निराकरणपूर्वकं शिरः चालयन् अवदत् – ''पञ्चाशतः वर्षेभ्यः पूर्वं प्रवृत्तस्य दोषस्य निमित्तम् एतेन मेषेण किमर्थं दण्डनं प्राप्तव्यम् ?'' इति ।






# आम्रोत्सवस्य पृष्ठभूमिकायां स्थिता कथा

कारैकल्प्रदेशे, यश्च तमिळुनाडुराज्ये तिष्ठति, फ्रेञ्चजनानाम् अधीनश्च आसीत्, पुनीतवतीम् आराधयितुं प्रतिवर्षं चतुर्दिनावधिकः आम्रोत्सवः आचर्यते । पुनीतवती 'कारैकल् अम्मैय्यार्' इति प्रसिद्धा अस्ति ।

परमदत्तन्नामकस्य वणिजः पत्नी पुनीतवती भगवतः शिवस्य परमभक्ता आसीत् । कदाचित् परमदत्तन्वर्यः कुतश्चित् अपूर्वम् आम्रफलद्वयम् आनीतवान् । तस्मिन् एव दिने कश्चन संन्यासी तत् गृहम् आगतवान् भिक्षायाचनाय ।

सः अपि भगवतः शिवस्य भक्तः इति यदा ज्ञातं तदा तौ दम्पती तं सहर्षं स्वागतीकृतवन्तौ । पुनीतवती तस्मै अन्नं, व्यञ्जनम्, एकम् आम्रं च समर्प्य तं सत्कृतवती । तच्च दिनम् 'आणि'मासस्य पूर्णिमा । ('आणि' इति तमिळुनाडुराज्यस्य मासीयं नाम)




तमिळुनाडुराज्ये ६३ नायन्माराः प्रसिद्धाः । तेषु कारैकल् अम्मैयार् अपि अन्यतमा । नायन्मारेषु महिला एषा एका एव ।

'आणि'मासस्य पूर्णिमायां कारैकल्-प्रदेशे जनाः मार्गे आम्रफलानि विकिरन्ति । एतानि भगवता प्राप्यन्ते एव इति तेषां विश्वासः । एतस्मिन् वर्षे एषः आम्रोत्सवः (मङ्गनीपर्व इति स्थानीयं नाम) जूनमासस्य २० तमे दिनाङ्के आचरितः ।



# विष्णुपुराणम्

यदा बुद्धस्य आगमनवार्ता श्रुता, ततः आरभ्य नागरिकेषु नूतनस्य चैतन्यस्य आविर्भावः अभवत् । कपिलवस्तुनगरस्य सर्वे जनाः बुद्धस्य स्वागतार्थं प्रयत्नशीलाः जाताः । अत्यल्पे एव काले विविधैः अलङ्कारैः शोभितं नगरं नूतननगरम् इव प्रतिभाति स्म ।

पुत्रस्य आलिङ्गनभाग्यं कल्पयतः वृद्धस्य शुद्धोदनमहाराजस्य पितृहृदयम् उत्कण्ठितम् आसीत् । महाराजः शुद्धोदनः, यशोधरा, राहुलः च राजप्रासादस्य सोपानानि तीर्त्वा पुरतः स्थितवन्तः । चेन्नः आनन्देन अश्रूणि मोचयन् प्राङ्गणस्य पुरतः आगत्य स्थितवान् ।

बुद्धः भिक्षापात्रं गृहीत्वा राजप्रासादस्य समीपम् आगतवान् । राहुलः धावन् आगत्य जनकस्य पादयोः उपरि पतितवान् । यशोधरा चिरकालानन्तरं दृष्टस्य भर्तुः प्रसन्नं वदनं निर्निमेषं पश्यन्ती तं नमस्कर्तुं मन्दं मन्दं तस्य समीपम् आगतवती । अनन्तरं तस्य पादयोः उपरि स्वकीयं मस्तकं स्थापितवती । स्वीयाभ्यां नेत्राभ्यां निस्सरन्त्या अश्रुधारया बुद्धस्य चरणौ अभिषिक्तवती सा ।

प्रियकुमारम् आलिङ्गितुं हस्तौ प्रसार्य आगतः शुद्धोदनः, बुद्धस्य परिव्राजकरूपं भिक्षापात्रं च दृष्ट्वा भ्रान्तमतिः इव तथैव प्रतिमावत् स्थितवान् । भिक्षुरूपधारिणं कुमारं दृष्ट्वा वृद्धस्य राज्ञः हृदयं शोकाग्निना दग्धम् अभवत् । नेत्राभ्यां निरन्तरा अश्रुधारा । चिरकालस्य अनन्तरं पुत्रदर्शनेन आनन्दं शोकं च युगपत् एव प्राप्तवतः तस्य हस्तौ तु आलिङ्गनम् अपि विस्मृत्य तथैव स्थगितौ ।

अनन्तरं – ''तात ! वत्स ! कुमारसिद्धार्थ !



गौतम !'' इत्यादिरीत्या शुद्धोदनः उन्मत्तवत् विलपन् तत्रैव अधः पतित्वा मूर्च्छितः जातः ।

बुद्धः भूमौ उपविश्य, पितुः मस्तकम् अङ्के स्थापयित्वा स्वीयेन काषायवस्त्रेण शैत्योपचारं कृतवान् । कुमारस्य अमृतस्पर्शेन शुद्धोदनः सचेतनतां प्राप्तवान् ।

''जनक ! मम प्रणामं स्वीकरोतु ! अहम् अर्थस्य सिद्धिं प्राप्य सिद्धार्थः भूत्वा आगतः अस्मि'' इति वदतः बुद्धस्य अमृतबिन्दु-रूपीणि वचनानि शुद्धोदनस्य कर्णयोः पतितानि । बुद्धस्य अर्धनिमीलिताभ्यां नेत्राभ्यां चन्द्रकिरणाः निस्सरन्तः आसन् । तस्य मुख-मण्डले अपूर्वं तेजः दृश्यते स्म । कश्चित् अनिर्वचनीयः प्रभावः शुद्धोदनम् उत्तेजितम् अकरोत् । अशान्तिपथात् शान्तिपथं प्रति, तमसः ज्योतिर्वलयं प्रति, भ्रमातः सत्यं प्रति च तं नयति स्म । तस्य कर्णयोः 'बुद्धं शरणं गच्छामि' इत्यस्य प्रतिध्वनिः श्रूयते स्म । शुद्धोदनस्य कम्पमाना जिह्वा अपि तानि एव वचनानि अनुवदति स्म । राहुलः अपि तदेव उच्चारयति स्म । प्रजासमूहे अपि तदेव घोषणम् । यशोधरा नेत्रे निमील्य वक्षःस्थले अञ्जलिं बद्ध्वा, ध्यानमुद्रायां स्थित्वा 'बुद्धं शरणं गच्छामि' इति जपति स्म ।

तदा बुद्धः राहुलस्य मस्तकं प्रीत्या स्पृशन् - ''कुमार ! भवान् अपि बुद्धः भूत्वा धर्मं सङ्घं च अनुसरन् मानवतायाः सार्थक्यं सम्पादयतु इति आशीर्वादं करोमि । उत्तमधर्मान् अहिंसां च ये आदरेण आचरन्ति ते सर्वे बुद्धाः एव । यः मानवः बोधं प्राप्तवान् सः बुद्धः । धर्मः एव शरण्यः । बुद्धसङ्घाः एव युगधर्मस्य उद्धारकार्ये समर्थाः'' इति उक्तवान् ।

इदानीं यशोधरायाः नेत्रे कमलवत् विकसिते । सा बुद्धस्य वदनं निश्चलभावेन पश्यन्ती - ''स्वामिन् ! आत्मानं भिक्षुरूपेण भवते समर्पयामि । एतावत्पर्यन्तम् अहं गृहिणी आसम् । इतःपरं मानवतायाः सेवार्थं अर्पिता परिव्राजिका भविष्यामि । भवतः चरणयोः अनुसरणम् एव मदीयः उचितः धर्मः । मानवसमूहे स्त्रियः अपि समानस्थानीयाः । ताः अपि बौद्धैः आदरणीयाः खलु ? अतः स्त्रीणां कृते बौद्धसङ्घेषु स्थानस्य आदरस्य च कल्पनेन अस्मान् अनुगृह्णातु'' इति प्रार्थनां कुर्वती भक्त्या प्रणामं कृतवती ।

एवंरीत्या यशोधरा बौद्धमतस्य प्रथमा अनुयायिनी अभवत् ।

एतत् सर्वं पश्यन् आनन्दाश्रूणि स्रावयन् चेन्नः पार्श्वे स्थितः आसीत् । देवताभावेन

पश्यन्तं चेन्नं दृष्ट्वा बुद्धः तं स्वसमीपम् आकारितवान् । चेन्नः समीपम् आगत्य बुद्धं नमस्कर्तुं प्रवृत्तः ।

तदा तं तथैव निवार्य बुद्धः - ''चेन्न, ज्येष्ठानां पुरतः कनिष्ठाः सर्वदा कनिष्ठाः एव । महापदवीं प्राप्तवद्भिः अपि कनिष्ठैः ज्येष्ठाः आदरणीयाः । मम दृष्ट्या भवान् इदानीम् अपि पूजनीयः एव । भवान् मां कपिलवस्तुनगरतः विशालविश्वं नीतवान् । एतादृशः भवान् पुण्यमूर्त्तिः खलु ? बुद्धः भूत्वा अहं यानि तत्त्वानि धर्मान् च ज्ञातवान्, तान् लोकस्य कल्याणार्थम् उपदिशामि । अतः जनाः मां भगवन्तं वदन्ति । तावता अहं भगवान् न जातः । अन्ये इव अहमपि सामान्यः कश्चन मानवः'' इति उक्तवान् ।

बुद्धस्य वचनानि श्रुत्वा चेन्नः प्रार्थनां कुर्वन् इव - ''भगवान् बुद्धः इति भावनया एव वयं महतीं तृप्तिं प्राप्नुमः । तेन धर्माचरणं, सङ्घसेवा, भक्तिविश्वासादयः प्रतिदिनं वर्धन्ते । अतः कृपया भवन्तं देवताभावनया द्रष्टुं पूजयितुं च अस्माकं सर्वेषाम् अवकाशः भवतु । प्रथमः बुद्धः भवान् साक्षात् देवः एव । तथा एव व्यवहारः भवतु । अत्र न कोऽपि दोषः, न वा अपचारः कोऽपि'' इति उक्तवान् ।

बुद्धः किमपि अनुक्त्वा तूष्णीं स्थितवान् । तदारभ्य बुद्धः 'भगवान् बुद्धः' इत्येव प्रसिद्धः जातः । सर्वेषां जिह्वासु बुद्धदेवः इत्येव सः प्रतिष्ठां प्राप्तवान् । श्रेष्ठः मानवः एव देवः इति अर्थं मनसि चिन्तयन् बुद्धः ताटस्थ्यम् अवलम्बितवान् ।



शाक्यवंशीयाः प्रायः सर्वे जनाः अपि बौद्धमतम् अवलम्बितवन्तः । ते जनाः बुद्धस्य आदेशानाम् उपदेशानां च प्रचारं कृतवन्तः । ते सर्वे भिक्षुरूपेण परिवृत्ताः, स्वीयाः सम्पत्तीः सङ्घाय समर्पितवन्तः च । स्वीयानि जीवनानि तैः जनानां सेवार्थम् आरक्षितानि ।

देवदत्तः एकः एव बाल्यतः आरभ्य बुद्धस्य विरोधी आसीत् । सः स्पर्धया बौद्ध-मतस्य तिरस्कारं कुर्वन्, ये केचन एव जनाः बौद्धमतं न स्वीकृतवन्तः, तान् समाकलय्य तैः सह अटति स्म । सः राजसम्बन्धी आसीत् । अतः तस्य अपि केचन अनुचराः आसन् एव ।

बुद्धः कपिलवस्तुनगरं परित्यज्य पुनः पूर्वस्थानं प्रति प्रस्थितवान् । तस्य अनुचरैः शिष्यैः च सह यशोधरा राहुलः चापि प्रस्थितवन्तौ ।



एवंरीत्या प्रत्यागमनमार्गे बुद्धः सुजातायाः गृहं भिक्षुरूपेण गतवान् । पूर्वं प्रतिज्ञातं वचनम् अविस्मृत्य आगतस्य तस्य दर्शनात् जातः सुजातायाः आनन्दः सीमातीतः आसीत् । बुद्धः सुजातायाः कुमारम् आशीर्वचनैः अनुगृह्णन् राहुलं दृष्ट्वा – "राहुल ! एषः बालः भवतः अनुजः । भवन्तौ उभौ अपि स्नेहितौ, आप्तौ, सहोदरौ, वर्णभेदरहितौ च भूत्वा मानवतां, वसुधैव कुटुम्बकम् इति नीतिं च लोके प्रसारयताम्" इति उक्तवान् ।

सुजाता बुद्धस्य शिष्या भूत्वा यशोधरया सह प्रस्थिता । अनन्तरं बुद्धः यशोधरां सुजातां च उद्दिश्य – "गृहिण्यः सत्यः एव स्त्रियः बौद्धमतम् अवलम्ब्य स्वीयान् पुत्रान् उत्तम-मानवान् कुर्वन्तु । इत्थं ताः श्रेष्ठाः मातृमूर्तयः भवन्तु" इति आदिष्टवान् ।

बुद्धः स्वीयान् अनुचरशिष्यान् सर्वान् अपि धर्मचक्रसञ्चालनार्थं चतसृषु अपि दिक्षु प्रेषितवान् । यशोधरां राहुलं च कपिलवस्तुनगरं प्रति सम्प्रेष्य, तत्र वृद्धस्य शुद्धोदनस्य योगक्षेमनिर्वहणं राजवंशस्य धर्ममार्गे नयनं च इति कार्यद्वयं तयोः कृते विहितवान् ।

एवंरीत्या सर्वेषाम् अपि प्रेषणस्य अनन्तरं बुद्धः एकाकी एव अरण्यमार्गे गन्तुं प्रवृत्तः । एवं गच्छन् सः एकं घोरारण्यं प्रविष्टवान् । तस्मिन् अरण्ये घोरातिघोरः क्रूरतायाः मूर्तिः 'अङ्गुलिमालः' नाम मार्गलुण्ठाकः आसीत् । ये ये तत् अरण्यं प्रविशन्ति तेषाम् अङ्गुष्ठानां मालां कृत्वा, तां मालां कण्ठे धरति स्म सः क्रूरः चोरः । ये ये तस्य दृष्टिपथम् आयान्ति, ते सर्वे भीत्या तम् एव शरणं गच्छन्ति स्म । अनेकेषां पथिकानां सर्वां सम्पत्तिम् अपहृत्य, तेषां हननं करोति स्म सः । तेषां सर्वेषाम् अपि अङ्गुष्ठान् सः अपहरति स्म ।

भूमण्डले अस्मिन् सर्वे अपि मां दृष्ट्वा भीताः भवेयु इति अङ्गुलिमालस्य उद्देशः आसीत् ।

तत् अरण्यम् एकाकितया गच्छन्तं बुद्धं दृष्ट्वा मार्गे केचन मेषपालाः – "स्वामिन् ! एतेन मार्गेण किमर्थं गम्यते ? चत्वारिंशत्तः अपि न्यूनाः जनाः यदि तेन मार्गेण गच्छन्ति, तर्हि एकः अपि जीवन् न प्रत्यागच्छति । एकाकिना तु तत्र सर्वथा न गन्तव्यम् । कदाचित् यदि यः कोऽपि जीवेत् तर्हि तस्य अङ्गुष्ठं कर्तयित्वा गृह्णाति सः चोरः । तत्र तादृशः कश्चन भयङ्करः चोरः अस्ति" इति जागरितवन्तः । किन्तु बुद्धः तेषां मेषपालानां जागरणवचनम् अशृण्वन् एव अरण्यमार्गेण अग्रे अग्रे गतवान् ।

एवं रीत्या अरण्ये चलन्तम् एकाकिनं बुद्धं दृष्टवान् अङ्गुलिमालः । स्वकाषायवस्त्रमध्ये किमपि गुप्तरूपेण स्थापयित्वा एषः गच्छन् अस्ति इति सः चिन्तितवान् ।

अङ्गुलिमालः भयङ्करं रक्तलिप्तम् अतितीक्ष्णं च स्वीयं खड्गम् उपरि उन्नीय दर्शयन् – ''कः भवान् ? वस्त्रमध्ये किं तत् ? अत्र ददातु तत्'' इति उक्तवान् ।

बुद्धः मन्दहासं प्रकटयन् काषायवस्त्रमध्ये स्थापितं भिक्षापात्रं बहिः आनीय अङ्गुलिमालाय दत्तवान् । अङ्गुलिमालः तत् गृहीत्वा इतस्ततः परिवर्त्य दृष्ट्वा – ''भिक्षापात्रम् एतत् ! भवान् भिक्षुकः भवतु, यो वा को वा भवतु, किं तेन मम ? माम् एव अन्विष्यन् इव अत्र आगत्य मम पुरतः एव स्थित्वा हासं प्रदर्शयन् मम हस्ते एतत् अरिष्टकाष्ठं ददाति किल ? भवतः कियत् धार्ष्ट्यम् ? भवतः भीतिः एव किं नास्ति ? मम खड्गं दृष्टवान् किल भवान् ? अहं कः इति ज्ञायते किम् ?'' इति पृष्टवान् ।

''भवान् मनुष्यः इति अहं जानामि । अहम् अपि मनुष्यः एव । एवं स्थिते भयस्य किं वा कारणं स्यात् ?'' इति उक्तवान् बुद्धः ।

''अहं न साधारणः मनुष्यः । भवान् स्वीयान् प्राणान् इच्छति चेत् स्वीयम् अङ्गुष्ठं मह्यं दत्त्वा अनन्तरम् एव गन्तुम् अर्हति । अन्यथा अहं भवन्तं हत्वा, भवतः अङ्गुष्ठं छित्त्वा ग्रहीष्यामि'' इति गर्जितम् अङ्गुलिमालेन ।

''भवान् मां किं मारयति ? तत् तु किमपि महत् कार्यं न । अतीव सुकरं कार्यम् । खड्गः एव तत् कार्यं लीलया करोति । जातस्य मरणं ध्रुवम् इति वाक्यं भवान् न जानाति



किम् ? इदानीं यदि मम मरणं भवता साधनीयम् इति विधिः अस्ति, तर्हि भवान् स्वकार्यं करोतु । सन्तोषेण अहं मरिष्यामि । अद्य भवान् मां मारयति । एवमेव यदा-कदाचित् भवतः अपि मरणं निश्चितमेव खलु ? तदा भवान् मद्वत् निश्चिन्तः सन् हसन् एव मृत्युं स्वीकर्तुं किं शक्नुयात् ? एतावत्-पर्यन्तम् अहं कस्य अपि अपकारं हानिं वा न कृतवान् । भवतः अपि न करोमि । मनसि अपि भवतः निन्दां न करोमि । साधुजीवनेन तृप्तः अहम् आनन्देन मृत्युं स्वीकरिष्यामि । भवतः मरणसमयः अपि तथा एव भवतु इति मम आशा'' इति उक्तवान् बुद्धः ।

बुद्धस्य वचनानि श्रुत्वा अङ्गुलिमालः भ्रान्तः इव निश्चेष्टः जातः । किमपि चिन्तयन् सः तथैव स्थितवान् । 'स्वीयानां पापानां किमपि प्रायश्चित्तमेव नास्ति । एतादृशं मां कः वा क्षाम्यति ? तादृशी दया कस्य वा स्यात् ?' इत्येतया चिन्तया खिन्नः चोरः सहसा बुद्धं स्मृतवान् । पूर्वं कदाचित् सः बुद्धस्य विषयं श्रुतवान् आसीत् । 'इदानीं सः एव मम उद्धारकर्ता । कुत्रचित् श्रुतं बुद्धस्य मूलमन्त्रम् इदानीं वदामि' इति चिन्तयन् सः ''बुद्धं शरणं गच्छामि'' इति उक्तवान् ।

''अङ्गुलिमाल ! अहम् एव बुद्धः । भवतः कृते एव आगतवान् अस्मि । अतः एव अहं भिक्षापात्रं भवते दत्तवान् । गतजीवनं गतजन्म इव विस्मरतु । इदानीं भवान् मम शिष्यः । चलतु, अग्रे गच्छाव'' इति उक्तवान् बुद्धः ।

''बुद्धभगवन् !'' इति उच्चैः वदन् अङ्गुलिमालः बुद्धस्य चरणयोः उपरि पतितवान् । अनन्तरं - ''केवलस्य मम एकस्य एव उद्धारः न समीचीनः । मम सर्वे अनुचराः अपि भवतः शिष्याः'' इति उक्त्वा अङ्गुलिमालः स्वीयान् सर्वान् आहूय - ''एतान् सर्वान् अपि अनुगृह्णातु'' इति प्रार्थितवान् ।

अङ्गुलिमालः, तस्य सर्वे अनुचराः च बौद्धभिक्षवः भूत्वा बुद्धम् अनुसृत्य गतवन्तः । अरण्यस्य प्रवेशसमये बुद्धः एकाकी आसीत् । निर्गमनसमये महासमूहः एव तेन सह आसीत् । इत्थं बुद्धस्य उपदेशवचनानि श्रुत्वा अनेके दुष्टाः पश्चात्तापेन दग्धाः सन्तः बुद्धस्य शिष्याः जाताः । सङ्घसेवार्थं शेषजीवनं समर्प्य ते पूताः अपि अभवन् ।





# पिशाचः वीरदासः

कस्मिंश्चित् ग्रामे वीरदासः नाम कश्चन कृषिकः आसीत् । तस्य पत्न्याः नाम यमुना । तयोः कश्चन पुत्रः अस्ति । तस्य नाम कृष्णदासः इति । सः आकारेण पिता इव एव आसीत् ।

कदाचित् उषसि एव वीरदासः कृषिक्षेत्रं प्रति गतवान् । दौर्भाग्यकारणतः कश्चन सर्पः तत्र तम् अदशत् । तस्मात् सः प्राणैः वियुक्तः जातः । अन्ये केचन कृषिकाः एतत् दृष्ट्वा तदीयं कलेवरं गृहं प्रति आनीतवन्तः । प्रतिवेशिनां साहाय्येन कृष्णदासः तस्य अन्त्यसंस्कारं निर्वर्तितवान् ।

पत्युः मरणात् दुःखिता वीरदासपत्नी यमुना कदाचित् निद्रितवती आसीत् । तदा तया कश्चन स्वप्नः दृष्टः । स्वप्ने तया पिशाचतां गतः उलूकध्वनिं कुर्वाणः श्मशाने वटवृक्षसमीपे सञ्चरन् पतिः दृष्टः ।

एतं विलक्षणं स्वप्नं दृष्ट्वा भीता सा उच्चैः चीत्कृतवती ।

तदा प्रतिवेशिनः आगत्य तस्याः सान्त्वनं कृत्वा अपृच्छन् - ''भगिनि ! किं भवत्या कोऽपि घोरः स्वप्नः दृष्टः ?'' इति ।

''मम पतिः घोरं पिशाचजन्म प्राप्तवान् अस्ति'' इति वदन्ती सा स्वप्नवृत्तान्तं समग्रं तान् श्रावितवती ।

वीरदासस्य मरणस्य अनन्तरं तृतीये दिने श्मशानसमीपे वटवृक्षस्य अधः मूर्च्छावस्थां गतः कश्चन कृषिकः प्राप्तः ।

ग्रामजनाः तं ग्रामम् आनीय प्रथमोपचारेण सचेतनं कृतवन्तः । सचेतनतां गतः सः पूर्वरात्रेः घटनां श्रावितवान् ।

''अहं पार्श्वग्रामवासी । तत्र मम कश्चन आपणः अस्ति । आवश्यकानि वस्तूनि क्रेतुम् अहम् एतं ग्रामम् आगतः । एवम् अहं तदा तदा एतं ग्रामम् आगच्छन् भवामि एव । वस्तूनि क्रीत्वा इतः प्रतिगच्छन् आसम् ।

पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा



प्रतिगमनसमये विलम्बः जातः आसीत् । मार्गः सुपरिचितः एव आसीत् इत्यतः अहं धैर्येण एव गच्छन् आसम् । यदा श्मशानसमीपस्थः वटवृक्षः आसन्नः तदा उलूकशृगालादीनां ध्वनिः मया श्रुतः । वृक्षस्य जटाम् आलम्ब्य लम्बमानः कश्चन श्वेतः आकारः तत्र दृष्टः । मम तु पिशाचनामस्मरणात् एव भीतिः । सः भूतः मां दृष्ट्वा अवदत् - 'अये ! भवत्समीपे स्थितं धनं समग्रं मह्यं दीयताम् । मम पत्नीपुत्रयोः उदरं पूरितं भवेत् खलु ? अहं कः इति किं ज्ञायते ? अहम् अस्मि वीरदासः'' इति ।

तस्य कृषिकस्य वचने ग्रामीणैः विश्वासः कृतः । ते यमुनायाः गृहं गत्वा अन्विष्टवन्तः । किन्तु तैः तत्र किमपि न प्राप्तम् ।

यमुना अपमानं प्राप्य अश्रूणि स्राववितवती । 'साधुस्वभावः मम पतिः एवं पिशाचरूपं प्राप्य यान्त्रिकान् लुण्ठयन् अस्ति खलु ? अहो, दौर्भाग्यम्'' इति विलपन्ती सा बहुधा रोदनं कृतवती ।

तस्मात् दिनात् यमुनायाः विषये जनानां दृष्टिः परिवृत्ता । ते तया सह वार्तालापं स्थगितवन्तः । तां दृष्ट्वा मुखम् अन्याभिमुखं कृत्वा गतवन्तः ते । एतस्मात् यमुना महतीं व्यथाम् अनुभूतवती ।

पुनः कदाचित् काचित् महिला पार्श्वग्रामात् आगच्छन्ती आसीत् । पिशाचः तस्याः सर्वाणि आभरणानि बलात् वशीकृत्य ताम् अवदत् - ''एतानि सर्वाणि आभरणानि यदि मम पत्नी धरेत्, तर्हि अहो, सा महासुन्दरी स्यात्'' इति ।

एतत् ज्ञातवन्तः ग्रामीणाः पुनः अपि यमुनायाः गृहे अन्वेषणं कृतवन्तः । किन्तु तत्र आभरणं किमपि न प्राप्तम् ।

अतः तां बहुधा भर्त्सयन्तः ते उक्तवन्तः - ''भवत्याः पतिः अस्माकं ग्रामस्य पीडायै जातः । तम् इतः दूरं प्रेषयतु । अन्यथा भवत्या एव एषः ग्रामः अचिरात् परित्यक्तव्यः भवेत्'' इति ।

इदानीं किं करणीयम् इति न ज्ञातं यमुनया । 'पत्युः सम्बन्धः अद्यापि मम अस्ति इति जनाः भावयन्ति । ग्रामं परित्यज्य गन्तव्यम् इति पिशाचः कथम् आदेष्टुं शक्येत मया ?' इति बहुधा अचिन्तयत् यमुना ।

एतदनन्तरम् अपि त्रिभिः स च पिशाचः दृष्टः । अतः अन्धकारप्रसारानन्तरं ग्रामजनाः सर्वे अपि गृहात् बहिः गन्तुम् एव भीताः भवन्ति स्म ।

अतः ग्रामजनाः परस्परं समालोच्य यमुनाम् उक्तवन्तः – ''यावत् भवती, भवत्याः पुत्रः च एतं ग्रामं परित्यज्य न गच्छतः तावत् स च पिशाचः अपि स्वस्थानात् न निर्गच्छेत् । अतः श्वः सायङ्कालाभ्यन्तरे भवद्भ्याम् एषः ग्रामः त्यक्तव्यः । अन्यथा वयमेव भवन्तौ बलात् प्रेषयिष्यामः'' इति ।

गृहं परित्यक्तं चेत् अन्यः आश्रयः कोऽपि नास्ति इत्यतः यमुना 'पिशाचं निर्गच्छतु भवान् इति वदामि' इति निश्चयं कृतवती, श्मशानं प्रति गतवती च ।

यदा वटवृक्षः आसन्नः तदा ध्वनिः श्रुतः – ''अये तिष्ठ, तिष्ठ । मम पत्नीपुत्रयोः अपि पोषणं करणीयं मया । अतः स्वसमीपे स्थितम् अमूल्यं वस्तु अर्प्यताम् । अहम् अस्मि वीरदासपिशाचः'' इति ।

एतत् श्रुत्वा यमुना आश्चर्यचकिता । यतः स च स्वरः तस्याः पत्युः स्वरः इव न आसीत् ।

सा झटिति प्रतिगत्य पुत्रं कृष्णदासं प्रवृत्तं सर्वं श्रावयित्वा अवदत् – ''वत्स ! कोऽपि दुष्टः भवतः पितुः अपख्यातिं कल्पयन् अस्ति । सः ग्रहीतव्यः एव'' इति ।

ततः कृष्णदासः क्षणकालं विचिन्त्य कमपि उपायम् अचिन्तयत्, मातरम् अश्रावयत् च । यमुना सहमतिं दर्शितवती ।

अनन्तरदिने यमुना ग्रामजनान् अवदत् – ''आवां ग्रामं परित्यज्य गच्छन्तौ स्वः'' इति ।

तस्यां रात्रौ यमुना कृष्णदासः च भोजनं समापितवन्तौ । कृष्णदासः केशान् श्वेतवर्णेन लिप्त्वा वीरदासरूपं प्राप्तवान् । श्वेतयुतकं श्वेतवेष्टी च तेन धृता । ततः तौ श्मशानं प्रति गतौ । वृक्षस्य कोटरे कृष्णदासः निलीय अतिष्ठत् । यमुना गुल्मानां पृष्ठतः निलीय



अतिष्ठत् ।

किञ्चित्कालानन्तरं कश्चन विना शब्दम् आगत्य वटवृक्षम् आरुह्य शृगालध्वनिम् उलूकध्वनिं च अकरोत् ।

किञ्चित्कालानन्तरं कृष्णदासः वृक्षकोटरात् बहिः आगत्य वृक्षस्थं जनम् अवदत् - ''अये ! किं भवान् मम एव अपख्यातिं कल्पयति ? मया इदानीं भवान् दण्ड्यते । अहं कः इति किं भवता ज्ञायते ? अहमस्मि वीरदासपिशाचः'' इति ।

एतत् श्रुत्वा वृक्षस्थः जनः कूर्दनेन भूमिम् आगत्य भीत्या कम्पमानः - ''वीरदास ! कृपया अहं क्षन्तव्यः । मया अपराधः कृतः । कृपया कामपि हानिं मा करोतु मम । भवतः पादौ गृह्णामि'' अवदत् इति ।

''एतावत्पर्यन्तं यत् लुण्ठितं तत् यदि प्रत्यर्प्येत तर्हि अहं भवतः कामपि हानिं न करिष्यामि'' इति अवदत् वीरदासः ।

एतत् श्रुत्वा सः जनः भीत्या कम्पमानः एव वृक्षसमीपे खननम् आरब्धवान् ।

स्वस्य उपायः फलितः इत्यतः सन्तुष्टा यमुना ग्रामं गत्वा सर्वान् उद्दिश्य - ''मम पत्युः अपख्यातिकल्पकः जनः तत्र गृहीतः अस्ति । भवन्तः सर्वं स्वयं पश्यन्तु'' इति उक्त्वा सर्वान् श्मशानसमीपम् आनीतवती ।

पिशाचः इव व्यवहृतवान् जनः जनानाम् आगमनं दृष्ट्वा नितरां भीतः । तावता तेन लुण्ठितानि सर्वाणि भूमौ राशीकृतानि आसन् । ''अये दुष्ट ! किम् एतत् कृतं भवता ?'' इति वदन्तः जनाः तं सम्यक् ताडितवन्तः ।

तदवसरे कृष्णदासः नेत्रे प्रमार्जयन् कोटरात् बहिः आगत्य अपृच्छत् - ''किम् एतत् प्रवर्तते अत्र ? मया किञ्चित्कालं लघ्वी निद्रा प्राप्ता आसीत्'' इति ।

एतत् श्रुत्वा यमुना आश्चर्येण स्तब्धा । सर्वे अवगतवन्तः यत् पिशाचरूपतां गतः वीरदासः एव चोरस्य ग्रहणे साहाय्यं कृतवान् इति । आभरणादीनां स्वामिनः स्वीयानि वस्तूनि प्रतिप्राप्तवन्तः ।

ग्रामस्य जनाः विषादं प्रकटयन्तः यमुनां प्रार्थितवन्तः यत् ग्रामः न परित्यक्तव्यः इति । पिशाचाभिनयं कृतवान् जनः रात्रौ एव ग्रामं परित्यज्य पलायितवान् । एतदनन्तरं केनापि वीरदासपिशाचः न दृष्टः ।



# आर्यः

27

## अज्ञातराजकुमारस्य रहस्यम्

वीरसिंहः जब्बरसिंहः च यदा निधेः वशीकरणाय प्रयत्नं कृतवन्तौ तदा विद्रोहिणः तं प्रयत्नं विफलीकृतवन्तः । तान् निग्रहीतुं वीरसिंहः निश्चितवान् यत् अमृतपुरम् आक्रमणेन वशीकरणीयम् इति । विद्रोहिणां नायकः वसन्तः आर्यस्य आनयनाय जनं प्रेषयति । आर्यः मुनेः जयानन्दस्य आशीर्वादं प्राप्य आश्रमतः प्रस्थितवान् ।

चित्रम् - गान्धि-अय्यः

यत्र स्वयंसेवकाः सम्मिलिताः सन्ति तं प्रदेशं प्रति आर्यं नयति वसन्तः ।

मित्र ! तत्र स्थितः सः वृद्धः सज्जनः कः ?

सः भवतः पितुः प्रधानमन्त्री आर्यः मानवेन्द्रः । भवता अवश्यं द्रष्टव्यः सः ।

शान्तिपुरस्य रक्षणाय मार्गम् उपदिशति सः एव ।

तेन मिलाम तावत् ।

वसन्तः तस्य चरणयोः स्पर्शं करोति ।

श्रीमन् ! आर्योऽहम् अभिवादये ।

आवयोः प्रथममेलनम् एतत् महानुभाव !

प्रथमजन्मदिनावसरे मया भवान् दृष्टः आसीत् । अहो, दिनानि कथं वेगेन यान्ति !


भवान् एतेषां नेतृत्वं वहति यत् तत् तु महते सन्तोषाय ।
राज्यस्य वशीकरणाय प्रयतमानाः अपसारणीयाः अस्माभिः ।


आगच्छ ! विजयी भव !


पर्वतखातः पुरतः दृश्यते । सर्वे स्वीये स्वीये स्थाने सन्नद्धाः तिष्ठन्तु ।


सैनिकाः खातस्य समीपम् आगच्छन्ति ।
त्वं गच्छ । अहम् अग्रभागे तिष्ठामि ।


स्वयंसेवकाः वसन्तस्य निर्देशं प्रतीक्षमाणाः तिष्ठन्तु ।
वीरसिंहः सेनापतिः च अग्रे गच्छतां नाम । सैनिकान् आक्रम्य बाणप्रयोगः करणीयः ।


वीरसिंहः जब्बरसेनः च आगच्छन्तौ दृष्टौ मया ।


वीरसिंहः जब्बरसेनः च न जानीतः यत् आवां सेनातः पृथग्जातौ इति ।


HUGH!
अहं बाणेन हतः । रक्ष्यताम् ।
सैनिकाः बाणप्रहारं प्राप्य भूमौ पतिताः भवन्ति ।
एषः बाणः कुतः आगतः स्यात् ?


बहवः सैनिकाः भूमौ पतन्ति । तेषाम् आक्रन्दनं श्रूयते सर्वत्र ।
आह् ! हा !


कश्चन दलपतिः तौ अवरुणद्धि ।
महोदय ! शत्रवः आक्रान्तवन्तः सन्ति अस्मान् ।
शत्रवः ! किम् उक्तं भवता ?
खातप्रदेशम् अतिक्रम्य वयं समतलप्रदेशं प्राप्नुमः । तत्र शत्रवः लीलया सम्मुखीकर्तुं शक्याः ।


ते के स्युः जब्बरसेन ? वयम् आगच्छन्तः स्मः इति तैः कथं ज्ञातम् ?
ते प्रायः स्थानीयाः गिरिजनाः स्युः । अस्माकं सैनिकाः तान् निग्रहीष्यन्ति ।


अपरः दलपतिः उपस्थितः भवति ।
महोदय ! शत्रुसैनिकाः अस्मान् आक्रान्तवन्तः सन्ति । सर्वाभ्यः दिग्भ्यः बाणवर्षणं जायमानम् अस्ति ।


कश्चन बाणः सशब्दं जब्बरसेनसमीपम् आगच्छति । जब्बरसेनः अवनतः भवति ।
कः एतं बाणं प्रयुञ्जानः अस्ति ?


वीरसिंहः ततः पलायनाय प्रयतते ।
शत्रु-सैनिकाः ! शत्रुः सः कः ?


जब्बरसेनस्य अश्वः व्रणितः भवति
प्रतिगत्य भवान् सैनिकान् आदिशतु यत् वयम् अनुसरणीयाः इति ।


अनन्तरक्षणे बाणेन आहतः जब्बरसेनः अश्वात् अधः पतति ।
हा हन्त !
महोदय ! श्रीमन्


एषः दिवं गतः महाराज !
वीरसिंहः दलपतेः कथनं श्रुत्वा अश्वात् अवतरति ।


भवान् प्रतिगत्य सर्वान् सैनिकान् मेलयित्वा मम अनुसरणं करोतु ।
महाराज !
अस्माभिः सायङ्कालात् पूर्वम् अमृतपुरं प्राप्तव्यम् ।


वीरसिंहः पुनरपि यावत् अश्वम् आरोढुम् उद्युक्तः तावता आर्यः वसन्तः च तत्र उपस्थितौ भवतः ।
भवान् किमर्थम् अमृतपुरम् आक्रान्तुम् इच्छति ?


तिष्ठतु !
अनुवर्तते

# कोणार्कोत्सवः



कश्चन नाट्योत्सवः । सप्ताहावधिकः सः । वास्तविकं मन्दिरम् एव तस्य पृष्ठभूमिकायाम् !! एतादृशः उत्सवः प्रतिवर्षं डिसेम्बर्मासे प्रथमदिनाङ्कात् सप्ताहं यावत् प्रचलति कोणार्कमन्दिरे ओरिस्साराज्यस्थे । अत्र नेत्रानन्दकारं नृत्यं द्रष्टुं शक्यम् । श्रवणाञ्जलिपुटपेयं सङ्गीतं चापि श्रोतुं शक्यम् । ओरिस्साराज्ये मन्दिरेषु 'नाट्यमन्दिर' नाम्ना नृत्यसङ्गीतयोः अपि प्राधान्यं कल्प्यते स्म । एतेषु नाट्यमन्दिरेषु पूर्वं नृत्यसङ्गीतादयः प्रचुरतया प्रचलन्ति स्म इति प्रमाणीकुर्वन्ति मन्दिरभित्तिषु स्थिताः विविधाः शिल्पभङ्ग्यः । पूर्वं नृत्यं सङ्गीतं च पूजायाः एव अङ्गम् आसीत् । अतः एव पूजकाः यथा, तथैव नृत्यकाराः सङ्गीतकाराः च मन्दिरे नियुक्ताः भवन्ति स्म उद्योगित्वेन ।

कोणार्कोत्सवः ताम् एतां परम्पराम् उज्जीवयितुम् इच्छति । अनावृतनाट्यमन्दिरस्य व्यवस्थापनं कृत्वा अत्र देशस्य नानाभागेभ्यः बहवः नृत्यपटवः आनाय्यन्ते । तेषां पारम्परिकाणि नृत्यानि गीतानि च द्रष्टॄणां नेत्रयोः श्रवणयोः च आनन्दं जनयिष्यन्ति ।

कोणार्कोत्सवः नृत्यसङ्गीतमात्रोपेतः इति न । तत्र ओरिस्सासंस्कृतेः प्रतिबिम्बिका मेला अपि प्रचलिष्यति ।

ओरिस्साराज्यीयया प्रवासोद्यमसंस्थया एषः उत्सवः आयोज्यते ।

# अतिवृष्टि-ताप-वातावरण-वृक्षाणां सम्बन्धः

गते डिसेम्बर्मासे भारते त्सुनामीपीडा आसीत् । एतस्य एव वर्षस्य आदौ गुजराते, ततः बिहार-मध्यप्रदेशयोः, अनन्तरं मुम्बयीमहाराष्ट्रादिषु, तदनन्तरं कर्णाटकमध्यप्रदेशादिषु च अतिवृष्टिपीडा जाता । एताः सर्वाः घटनाः निसर्गसम्बद्धाः । अतः एतस्य कारणविषये सर्वकारेण, सर्वैः जनैः चापि चिन्तनीयम् एव खलु ?

मानवः विकासशीलः जीवी । विकासाय सः भूमौ, अन्तरिक्षे, अन्येषु महाभूतेषु च स्वीयम् अधिकारं दर्शयितुम् अर्हति एव । किन्तु निरङ्कुशः अधिकारः न हि उन्नतिं साधयितुम् अर्हति । निसर्गे स्वस्य अधिकारस्थापनम् अन्यत्, विजयः तु अन्यः एव । निसर्गे स्वस्य अधिकारं स्थापयन् मानवः विजयगर्वं प्राप्नुयात् कदाचित् । किन्तु यदि सः निसर्गम् आत्मसात् न कुर्यात्, निसर्गसामञ्जस्यं वा न चिन्तयेत्, तर्हि निसर्गः प्रतीकारं साधयेत् एव ।

गतेषु शते वर्षेषु जागतिकोष्णतापरिमाणम् ऊर्ध्वमुखम् एव दृश्यते । तत्रापि गते दशके महती वृद्धिः दृश्यते तत्र । एषा उष्णतावृद्धिः एव नैसर्गिकविकोपस्य कारणम् । एतस्य अवगमनाय न महान् प्रयासः करणीयः अस्ति केनापि ।

भूमौ महता प्रमाणेन तिष्ठति कार्बन् । समग्रायाः जीवसृष्टेः आधारः अस्ति तदेव कार्बन् । एतत् कार्बन् ज्वलनशीलम् । तन्नाम प्राणवायुना सम्मिलितं सत् तत् कार्बन्-डयाक्सैड्रूपं प्राप्नोति । एतस्यां प्रक्रियायाम् उष्णता उत्पद्यते । एषा उष्णता कार्योपयोगिनी विधातुं शक्या । अस्मकं दैनन्दिने जीवने कृष्णाङ्गारः अनिलः, शिलातैलम्, डिसैल्, मृत्तैलम् इत्यादीनि सर्वाणि अपि इन्धनानि कार्बनाधारितानि एव ।

लोके यत् कार्बन् भवति तत्सम्बद्धम् एकं चक्रम् अस्ति । कार्बन् यदा दग्धं भवति तदा कार्बन्डयाक्सैड् उत्पद्यते, वायुमण्डलं प्रविशति च । सस्यानि वायुमण्डलतः तम् अंशं स्वीकृत्य कार्बन्रूपेण प्राणवायुरूपेण च विभजन्ति । प्राणवायुः पुनरपि वायुमण्डलं प्रविशति । कार्बन् च घनपदार्थतां प्राप्य वृक्षस्य पर्ण-पुष्प-फल-बीजेषु सङ्गृहीतं भवति । सस्यं सस्यजन्यानि वा मानवः यदा सेवते तदा तदेव कार्बन् मानवशरीरं प्रविशति । यदा तत् कार्बन् मृत्तिकां प्रविशति तदा धातुभिः सम्मिलितं सत् कार्बोनिट्रूपं प्राप्नोति । जीविनः कलेवरं यदा मृद्गतं दग्धं वा भवति तदा ततः उत्पन्नं कार्बन्डयाक्सैड् वायुमण्डलं प्रविशति ।

एवमेव यदा वयं खनिजपदार्थतः धातुं पृथक्कुर्मः तदा अपि तत्रत्यं कार्बन् कार्बन्डयाक्सैड्रूपं प्राप्य वायुमण्डलं प्रविशति ।

एवं वायुमण्डलतः वृक्षान् प्रविश्य ततः जीविनां शरीरमाध्यमेन, मृत्तिकायां कार्बोनिट्रूपेण वा कार्बन् पुनः प्राप्यते । वृक्षाणां जीविनां वा अवसानात् पुनरपि तत् वायुमण्डलं प्रविशति । एवं प्रवर्तते तत् कार्बन्चक्रम् ।

भूमिं प्रति सूर्यस्य तापः यः आगच्छति तद्विषये कार्बन्डयाक्सैड् द्वारम् इव आचरति ।

तन्नाम तापः कार्बन्डयाक्सैड्पटलम् अतिक्रम्य भूमण्डलं प्रविशति । रात्रिकाले एषा एव ऊर्जा अवरक्तकिरणरूपेण यदा वातावरणतः बहिः गच्छति तदा एषः कार्बन्डयाक्सैड्-पटलः अवरोधनं करोति ।

वायुमण्डले कार्बन्डयाक्सैड् योग्येन परिमाणेन यदा भवति तदा तापाधिक्यस्य निर्गमने तत् उपकुर्वत् वातावरणं सुखदतापोपेतं करोति । यदि तस्य परिमाणे असमतोलनता भवति तदा पर्वतेषु ध्रुवप्रदेशे च स्थितं हिमं द्रवरूपतां प्राप्नोति । वृष्ट्याधिक्यं, चण्डमारुतोत्पत्तिः इत्यादयः सम्भवन्ति अपि ।

अतः भूमौ कार्बन्डयाक्सैड्परिमाणं सन्तुलितं यथा स्यात् तथा अवधानं तु अवश्यं स्यात् एव । यदि वृक्षाः तमंशम् आत्मसात्कुर्युः तर्हि तापवृद्धिः निवारिता स्यात् । एवं तरुलतादीनां द्वारा परिसरस्य समतोलनं रक्षितुं शक्यम् ।

नवदशे शतके यन्त्राभिवृद्धिः महता प्रमाणेन जाता । महता प्रमाणेन एव वस्तूनाम् उत्पादनम् अपि आरब्धम् । एतानि यन्त्राणि सर्वाणि प्रवर्तनाय इन्धनम् अपेक्षन्ते एव । तदर्थं भूगर्भतः खनिजाङ्गारः महता प्रमाणेन निष्कासितः, यन्त्रागाराणि चालितानि च । एतस्मात् कार्बोनेट्रूपेण स्थितं कार्बन् कार्बन्डयाक्सैड्रूपं प्राप्य वायुमण्डलं प्राविशत् ।

विंशतितम्यां शताब्द्यां खनिजतैलस्य अन्वेषणं जातम् । महता प्रमाणेन भूगर्भतः अपरिष्कृतं तैलनिक्षेपं प्राप्य पेट्रोल्, डिसेल्, केरोसिन्, एल्.पि.जि.ग्यास् इत्यादीनाम् उत्पादनं प्रवृद्धम् । वाहनानां चालने गृहोपयोगाय च एतेषाम् उपयोगः अपि आरब्धः ।

इदानीं जगति प्रतिवर्षं ३६० कोटिटन्मितं खनिजतैलं, २०० कोटिटन्मितः अनिलः, २४० कोटिटन्मितः खनिजाङ्गारः च भूगर्भतः प्राप्यते । एतस्मात् भूमेः अन्तः कार्बन्सङ्ग्रहः क्षीयमाणः अस्ति । वातावरणे कार्बन्डयाक्सैड्परिमाणं वर्धमानम् अस्ति अपि । वातावरणं प्रति कार्बन्प्रेषणं करोति मानवः शताधिकैः प्रकारैः । किन्तु वातावरणतः कार्बन्स्वीकाराय एकम् एव साधनं 'वृक्ष'रूपम् । अतः यदि वृक्षाः भवन्ति तर्हि एव जीवनयात्रा । यदि सस्यकुलं भवेत् तर्हि बीज-पर्ण-शाखादिरूपेण भूमिं प्रति कार्बन्-अंशस्य प्रेषणं भवेत्, तस्माच्च परिसरसंरक्षणं सम्पद्यते । अतः किं विलम्बेन ? एकम् एवं कार्यं करणीयम् अस्ति । तच्च वृक्षारोपणरूपम् ।

***– लीना मेहन्दले, कार्यकारिनिदेशिका (पि.सी.आर्.ए.)***



# चित्रशीर्षिकास्पर्धा



KALANIKETAN BALU

अधस्तनं चित्र-
द्वयं दृष्ट्वा
परस्परसम्बन्धिना
वाक्यद्वयेन
चित्रशीर्षिकां किं
भवन्तः प्रेषयितुं
शक्नुयुः ?



KALANIKETAN BALU

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते ।

पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

पुरस्कृता शीर्षिका





**अपक्वमनसः लाभदृष्टिः**
**पक्वमनसः दीर्घदृष्टिः**

'सप्टम्बर्'मासस्य शीर्षिकाप्रेषिका -
**जयलक्ष्मीः के.**
'श्रीवत्सम्', चेडिच्चेरी
पेरुवलत्तपरम्बा (पो.)
**कण्णूरु - ६७० ५९३** (केरलम्)



अक्टोबरमासे देहलीस्थस्य रक्तदुर्गस्य विषये यः लेखः प्रकाशितः तत्र प्रकाशितं चित्रं तु आगरादुर्गस्य आसीत् । रक्तदुर्गस्य चित्रं तु पार्श्वे दृश्यते । प्रमादः यः जातः तदर्थं क्षमां प्रार्थयामहे । **- सम्पादकः**

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

